# मनुस्मृतिः

अध्यायौ १, २

कुल्लूककृतमन्वर्थमुक्तावलीभाष्यं, बूलहर (Bühler) कृताङ्ग्लभाषाभाष्यं,
सत्यभूषणयोगिकृतविद्याधरीभाष्यं च

'मनुर्मननाद्' (यास्कः)
'न हि तदस्ति यदयं न मनुते' (दुर्गाचार्यः)




सम्पादकः
**सत्यभूषणो योगी**
एम. ए., शास्त्री, वेदालङ्कारः
संस्कृतहिन्दीविभागाध्यक्षः
सेंट स्टीफन्समहाविद्यालयो दिल्ली

**मोतीलाल बनारसीदास**
दिल्ली :: वाराणसी :: पटना

THE

# MANU SMṚTI

CHAPTERS 1, 2

WITH

Manvarthamuktāvali of Kullūka, English Commentary of G. Bühler and Vidyādhari Bhashya of Satya Bushan Yogi

Manurmananāt (Yaska)
Na hi tadasti yadayaṃ na manute (Durgāchārya)



*Editor*

**SATYA BUSHAN YOGI**
*M. A., Shastri, Vedālankār*

Head of the Sanskrit & Hindi Deptt.
St. Stephen's College, Delhi.

MOTILAL BANARSIDASS
DELHI :: VARANASI :: PATNA

# प्राक्कथनम्

मनुस्मृतेः प्रथमद्वितीयाध्याययोर्विस्तृतं भाष्यं मान्यवरश्रीसुन्दरलाल-महान[illegible]गादेवेन प्रस्तूयते । श्लोकः कुल्लूकभाष्यं बल्हर(Buhler)भाष्यं स्वकीयं च वि[illegible]थापरिभाष्यमत्र विराजते । भूमिकायां मनुस्मृतिसम्बद्धविषयाणां चर्चा । छात्रा[illegible] अन्ये च जिज्ञासवोऽध्येतारोऽधिगतलाभाः स्युरिति मे मतिः —

"तलान्तः श्रोतुमर्हन्ति सदसद्व्यक्तिहेतवः ।
हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकाऽपि वा ॥"

सेंट स[illegible]टीफन्समहाविद्यालयः
दिल्ली
दीप[illegible]मालिका, २०२२

कृतसम्बद्धश्रमः
सत्यभूषणो योगी

### समर्प्यते स्वर्गीयपितृपादेभ्यः

विश्वविद्यालयः ख्यातोऽस्ति गुरुकुलकाङ्गड़ी ।
गङ्गातीरे हरिद्वारे महोत्कर्षो विराजते ॥
आचार्यरामदेवेति नाम्ना जगति कीर्तितः ।
उपकुलपतिस्तत्राऽभूद् विद्वद्गणशिरोमणिः ॥
ज्ञानी वाग्मी महाधीर ऐतिहासिकवन्दितः ।
प्रणीतवान् बहून् ग्रन्थान् गम्भीरशोधशोभितान् ॥
पूर्वजन्मकृतैः पुण्यैर्लब्धं जन्म ततो मया ।
लब्धा गुरुकुले शिक्षा सामञ्जस्यविभूषिता ॥
दिव्यसंस्कृतिपूतं तं स्वपितरं तरणिप्रभम् ।
इदं विद्यावारीभाष्यं श्रद्धयाऽहं समर्पये ॥

---

## द्वितीयोऽध्यायः

# भूमिका

## मनुस्तस्य धर्मशास्त्रं च

मनुर्वेदेषु बहुधा स्तुतः[1] । प्रायः पितृत्वेन तस्य स्तुतिः । भारतीयपरम्परायां मनुरादिशासकः । आह कविकुलगुरुः —

> वैवस्वतो मनुर्नाम माननीयो मनीषिणाम् ।
> आसीन्महीक्षितामाद्यः प्रणवश्छन्दसामिव ॥
>
> रघु० १

वयं सर्वे मनुष्या मानवा वा (मनोरपत्यानि) स्मः । अस्मिन् संसारे सर्वेषु प्राणिषु मनुष्य एव मननशीलः । यास्कः कथयति—'मनुष्या मत्वा कर्माणि सीव्यन्ती'ति । मनुष्य एव सदसद्विवेकं कृत्वा 'परोक्षप्रियतरः भवति' ।

मन्यतेऽनेनेति मनुः । मन् + उ = मनुः । शृस्वृ० इति 'उः' (उणादि० १.११) ।

प्रतिकल्पं चतुर्दश मनवो भवन्ति । तेषां नामानि[2]—स्वायम्भुवः । स्वारोचिषः । उत्तमः । तामसः । रैवतः । चाक्षुषः -(एते गताः) । वैवस्वतः -(वर्तमानोऽयम्) । सावर्णिः । दक्षसावर्णिः । ब्रह्मसावर्णिः । धर्मसावर्णिः । रुद्रसावर्णिः । देवसावर्णिः । इन्द्रसावर्णिः । ।—(एते भविष्यन्ति)

वैवस्वतः सूर्यात्संज्ञायां जातः । आलङ्कारिकदृष्ट्या सूर्यः=आलोकः, संज्ञा=सम्यग्ज्ञानम् ।

### मन्वन्तराणि[3]

मनवः स्वायम्भुवादयस्तेषामवधिर्योऽस्मिन्निति मन्वन्तरम् । इदं हि दिव्यानां

---

१. वेदे मनुस्वरूपस्य सविस्तरावबोधाय पठनीयं सत्यभूषणयोगिविरचितहिन्दीपुस्तकम्—'कामायनी का सम्यक् मनन'

२. शब्दकल्पद्रुमे श्रीभागवतेऽष्टमस्कन्धस्य प्रथमाध्यायात् उद्धृतम् ।

३. अमरकोषः १.४.२२

युगानामेकसप्ततिः । उक्तं विष्णुपुराणे—

"एवं चतुर्युगाख्यानां साधिका ह्येकसप्ततिः ।
कृतत्रेतादियुक्तानां मनोरन्तरमुच्यते ॥
दैविकानां युगानान्तु सहस्रं ब्रह्मणो दिनम् ।
कृतत्रेतादियुक्तानां मनोरन्तरमुच्यते ॥"

एतदङ्कतो यथा ३०६,७२०,००० । एवं चतुर्दशमन्वन्तरैर्ब्रह्मदिनम् अर्थात् ब्रह्मणो दिनमध्ये चतुर्दशमन्वन्तराणि भवन्ति । एको मनुर्यावदधिकारी भवति स कालो मन्वन्तरसंज्ञको भवति ।

## वैवस्वतमन्वन्तरम्

वैवस्वते मन्वन्तरे वामनोऽवतारः । पुरन्दर इन्द्रः । आदित्या वसवो रुद्रा विश्वे देवा मरुद्गणा अश्विनौ ऋभवो इत्याद्या देवाः । कश्यपोऽत्रिर्वसिष्ठो विश्वामित्रो गौतमो जमदग्निर्भरद्वाज एते सप्तर्षयः ।

## वैवस्वतमनोः पुत्राः

तस्य दश पुत्राः —इक्ष्वाकुः । नृगः । शर्यातिः । दिष्टः । धृष्टः । करूषकः । नरिष्यन्तः । पृषध्रः । नाभागः । कविः ।

## धर्मशास्त्रम्

धर्मशास्त्रम्—धर्मस्य धर्माय वा शास्त्रम्, मन्वादिप्रणीतशास्त्रम्—

मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोऽङ्गिराः ।
यमापस्तम्बसंवर्ताः कात्यायनबृहस्पती ॥
पराशरव्यासशङ्खलिखिता दक्षगौतमौ ।
शातातपो वसिष्ठश्च धर्मशास्त्रप्रयोजकाः ॥

याज्ञवल्क्यस्मृतिः, १-५-६.

---

इमानि वर्णनान्येषा च परिगणना परम्परानुसारिणी । विविधकोषाद्याधृत्येदं सर्वं गणनाजातं लिख्यते । नात्रास्माकं काचित्सहमतिरसहमतिर्वा । अस्मिन् विषयेऽनभिज्ञा वयम् । जिज्ञासूनां विचारायैवेदमत्र समावेशितम् ।

धर्मशास्त्रं स्मृतिरपि कथ्यते—

**श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः**

मनु० २.१०

धर्मः कः ? धारणाद्धर्मं इत्याहुः । यो भूतानि धारयति (येन वा भूतानि धार्यन्ते) यं वा भूतानि धारयन्ति स धर्मः । मूलतो भगवान् एव धर्मः । द्वितीयतश्च ते सर्वे नियमाः कार्याणि च धर्मपदाभिधेयानि यैर्भूतानि सम्यक् धारितानि भवन्ति । अस्मिन् हि नानाविधुदान्तरायाकुले संसारे जनो दुःखोऽविचलश्च भूत्वा कथं गच्छेद् उन्नतिपथगामी च स्यात् ? धर्मशास्त्रे त एव नियमा उपदिश्यन्ते।

'धारणाद्धर्मं इत्याहुः' अतः स्नानमपि धर्मो भवति । अन्यानि च सामान्यानि दैनन्दिनकार्याण्यपि धर्मपदभाञ्जि भवन्ति । अतः स्मृतौ (धर्मशास्त्रे) सर्वोऽपि विषयः समायाति । मानवस्य धारणं बहुविधं भवति । पञ्चशरीरेषु स्थित आत्मा तदैव सुखी भवति यदा तस्य पञ्च शरीराणि सुखानि स्युः—

१. अन्नमयशरीरम्

२. प्राणमयशरीरम्

३. मनोमयशरीरम्

४. विज्ञानमयशरीरम्

५. आनन्दमयशरीरम्

आनन्दमये शरीरे तिष्ठति ज्योतिर्मय आत्मा । यथा सुदृढरथस्थो रथी सुखी भवत्येवमेव सुदृढसुविकसितशरीरस्थ आत्मा सुखी भवति । मनुष्यस्तदैव सुखी भवति यदा तस्य भौतिकाध्यात्मिकी चोभे अप्युन्नती स्याताम् । अन्यथा धर्मो (धारणं) न भवति, महाऽधर्मो (अधारणं) भवति—

**यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः**

वैशेषिकदर्शनम् १.१

ईशोपनिषद्यपि धर्मोपदिष्टम्—

**विद्यां चाविद्यां च यस्तद्वेदोभयं सह ।**
**अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥**

कोऽधर्मः ? सर्वोऽप्येतादृश आचारोऽधर्मो येन प्रजा अपूता भवन्ति, येन सृष्टिव्यवस्थायामुपप्लवो जायते । आह च भगवान्—

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥

शाश्वतश्रुतिमाधृत्यानुशासनाय धर्मशास्त्रं (स्मृतिः) प्रणीयते ।[1] इद धर्मशास्त्रमपि (मनुस्मृतिरपि) श्रुतेर्नियमान् विशदीकरोति युगानुकूलं च व्याकरोति । श्रुतौ यो धर्मो बीजरूपेण कथितस्तस्य शाखेयमिव स्मृतिः । प्रामाण्यं तु सर्वत्र श्रुतेरेव—

धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः

मनु० २.१३

केवलं श्रुतेरेव स्वतः प्रामाण्यम् । सर्वस्यान्यस्य परतः प्रामाण्यम् ।

विहितश्रुतिमार्गावगाहनस्य कृतिनः कृतिरियं मनुस्मृतिः । गर्भाधानान्त्येष्टिपर्यन्तं मानवस्य जीवनं यथा केन नियमैः सुबद्धः स्यादेव धर्मोऽत्र प्रतिपादितः —सर्वविधोऽभ्युदयः परमनिःश्रेयसञ्चोभयमप्यवाप्तिः ।

अतएव कथ्यते—

यद्वै किं च मनुरवदत् तद्भेषजम्

तै० सं० २.२.१०.२

मनुर्वै यत्किञ्चिदवदत्तद्भेषजम्भेषजतायै

ताण्ड्यब्राह्मणम् २३.१६.१७

उक्तं च श्रीमद्भगवद्गीतायाम्—

इमं विवस्वते योगं प्रोक्तवानहमव्ययम् ।
विवस्वान् मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् ॥

मनुस्मृतावपि कथितम्—

यः कश्चित्कस्यचिद्धर्मो मनुना परिकीर्तितः ।
स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः ॥

मनु० २.७

१. कालिदासः —श्रुतेरिवार्थं स्मृतिरन्वगच्छत् । रघु० २.२

अभिहितं चापस्तम्बधर्मसूत्रे—

'सहदेवमनुष्या अस्मिँल्लोके पुरा बभूवुः। अथ देवाः कर्मभिर्दिवं जग्मुर-हीयन्त मनुष्याः। तेषु ये कर्माण्यारभन्ते सह देवैर्ब्रह्मणा चामुष्मिन् लोके भवन्ति। अथैतन्मनुः श्राद्धशब्दं कर्म प्रोवाच। प्रजानिःश्रेयसं च।'

आपस्तम्ब० २.१६.१

कृता च बृहस्पतिस्मृतौ मनुस्मृतिस्तुतिरिति:—

**वेदार्थप्रतिबद्धत्वात् प्रामाण्यं तु मनोः स्मृतम्।**
**मन्वर्थविपरीता तु या स्मृतिः सा न शस्यते॥**

बृहस्पतिस्मृतिः संस्कार: १३

एवं स्मर्तव्याऽनुसर्तव्या धर्तव्या च जीवने मनुस्मृतिर्मानवैः प्रणवजपपरै-र्भविष्यति च प्रसादः स्मरारेः।

पूर्वमेवाभिहितं मन्त्रमननादिति। मननं कस्य? प्रथमं तु श्रुतेर्मननं विधीयते। इति मन्त्रनिर्वचनं यास्केन 'मन्त्रा मननात्' इति। मनुना मन्थितं तत्त्वं वेदे—

**यः कश्चित्कस्यचिद्धर्मो मनुना परिकीर्तितः।**
**स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः॥**

मनु० २.७

श्रुतौ च यदुपदिष्टं तस्य विनियोगो निर्दिश्यते स्मृतिकारेण निर्देशकालानु-सारम्। स्वर्णरूपा हि श्रुतिः। विभिन्नानि विभिन्नजनकालोपयोगीनि भूषणानि क्रियन्ते स्मृतिकारैः। स्वर्णकारैर्विना स्वर्णं सम्यगुपयोगार्हं न भवति। स्मृतिं विना श्रुतिरपि जनैरवगम्या समाचरणीया च न भवति। परं भेदं विस्मर्तव्यं न सर्व-मपि भूषणजातं शुद्धस्वर्णमयमेव तिष्ठेत्। यदि श्रुतिस्मृत्योर्विरोधः स्यात्तदा श्रुतिरेवानुसर्तव्या—विरोधिवचनं च प्रक्षिप्तं स्याद् यथाऽऽचार्यरामदेवमहो-दयेन 'भारतवर्षेतिहास' पुस्तके विवादीकृतम्। निम्नश्लोकेषु मनुस्मृतिः श्रुतेरेव प्रामाण्यं स्वीकरोति सर्वतोभावेन। मनुः पुनः पुनः श्रुतिं प्रशंसति—

वेदोऽखिलो धर्ममूलम् २.६
सर्वं तु समवेक्ष्येदं निखिलं ज्ञानचक्षुषा ।
श्रुतिप्रामाण्यतो विद्वान् स्वधर्मे निविशेत वै ॥ २.८
श्रुतिस्मृत्युदितं धर्ममनुतिष्ठन्हि मानवः ।
इह कीर्तिमवाप्नोति प्रेत्य चानुत्तमं सुखम् ॥ २.९
श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः ।
ते सर्वार्थेष्वमीमांस्ये ताभ्यां धर्मो हि निर्बभौ ॥ २.१०
योऽवमन्येत ते मूले हेतुशास्त्राश्रयाद् द्विजः ।
स साधुभिर्बहिष्कार्यो नास्तिको वेदनिन्दकः ॥ २.११
वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।
एतच्चतुर्विधं प्राहुः साक्षाद् धर्मस्य लक्षणम् ॥ २.१२
अर्थकामेष्वसक्तानां धर्मज्ञानं विधीयते ।
धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः ॥ २.१३
वेदोपकरणे चैव स्वाध्याये चैव नैत्यके ।
नानुरोधोऽस्त्यनध्याये होममन्त्रेषु चैव हि ॥ २.१०५
वेदमेव सदाऽभ्यस्येत् तपस्तप्स्यन् द्विजोत्तमः ।
वेदाभ्यासो हि विप्रस्य तपः परमिहोच्यते ॥ २.१६६
योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥ २.१६८
वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम् ।
अविप्लुतब्रह्मचर्यो गृहस्थाश्रममावसेत् ॥ ३.२
वेदोदितं स्वकं कर्म नित्यं कुर्यादतन्द्रितः ।
तद्धि कुर्वन्यथाशक्ति प्राप्नोति परमां गतिम् ॥ ४.१४
बुद्धिवृद्धिकराण्याशु धन्यानि च हितानि च ।
नित्यं शास्त्राण्यवेक्षेत निगमांश्चैव वैदिकान् ॥ ४.१९
वेदविद्याव्रतस्नातान् श्रोत्रियान् गृहमेधिनः ।
पूजयेद्धव्यकव्येन विपरीतांश्च वर्जयेत् ॥ ४.३१

ब्राह्मे मुहूर्ते बुध्येत धर्मार्थौ चानुचिन्तयेत् ।
कायक्लेशांश्च तन्मूलान् वेदतत्त्वार्थमेव च ॥ ४.९२

वेदमेव जपेन्नित्यं यथाकालमतन्द्रितः ।
तं ह्यस्याहुः परं धर्ममुपधर्मोऽन्य उच्यते ॥ ४.१४७

वेदाभ्यासेन सततं शौचेन तपसैव च ।
अद्रोहेण च भूतानां जातिं स्मरति पौर्विकीम् ॥ ४.१४८

श्रुतिस्मृत्युदितं सम्यङ्निबद्धं स्वेषु कर्मसु ।
धर्ममूलं निषेवेत सदाचारमतन्द्रितः ॥ ४.१५३

अनभ्यासेन वेदानामाचारस्य च वर्जनात् ।
आलस्यादन्नदोषाच्च मृत्युर्विप्राञ्जिघांसति ॥ ५.४

यस्मिन् देशे निषीदन्ति विप्रा वेदविदस्त्रयः ।
राज्ञश्चाधिकृतो विद्वान् ब्राह्मणास्तां सभां विदुः ॥ ८.११

चातुर्वर्ण्यं त्रयो लोकाश्चत्वारश्चाश्रमाः पृथक् ।
भूतं भव्यं भविष्यं च सर्वं वेदात्प्रसिध्यति ॥ १२.९७

शब्दः स्पर्शश्च रूपं च रसो गन्धश्च पञ्चमः ।
वेदादेव प्रसूयन्ते प्रसूतिर्गुणकर्मतः ॥ १२.९८

बिभर्ति सर्वभूतानि वेदशास्त्रं सनातनम् ।
तस्मादेतत्परं मन्ये यज्जन्तोरस्य साधनम् ॥ १२.९९

सैनापत्यं च राज्यं च दण्डनेतृत्वमेव च ।
सर्वलोकाधिपत्यं च वेदशास्त्रविदर्हति ॥ १२.१००

यथा जातबलो वह्निर्दहत्यार्द्रान् द्रुमानपि ।
तथा दहति वेदज्ञः कर्मजं दोषमात्मनः ॥ १२.१०१

वेदशास्त्रार्थतत्त्वज्ञो यत्रतत्राश्रमे वसन् ।
इहैव लोके तिष्ठन्स ब्रह्मभूयाय कल्पते ॥ १२.१०२

आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना ।
यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः ॥ १२.१०६

ऋग्वेदविद्यजुर्विच्च सामवेदविदेव च ।

त्र्यवरा परिषज्ज्ञेया धर्मसंशयनिर्णये ॥ १२.११२
एकोऽपि वेदविद्धर्मं यं व्यवस्येद् द्विजोत्तमः ।
स विज्ञेयः परो धर्मो नाज्ञानामुदितोऽयुतैः ॥ १२.११३
हत्वा लोकानपीमांस्त्रीनश्नन्नपि यतस्ततः ।
ऋग्वेदं धारयन् विप्रो नैनः प्राप्नोति किंचन ॥ ११.२६१
ऋक्संहितां त्रिरभ्यस्य यजुषां वा समाहितः ।
साम्नां वा सरहस्यानां सर्वपापैः प्रमुच्यते ॥ ११.२६२
यथा महाह्रदं प्राप्य क्षिप्तं लोष्टं विनश्यति ।
तथा दुश्चरितं सर्वं वेदे त्रिवृति मज्जति ॥ ११.२६३
आद्यं यत् त्र्यक्षरं ब्रह्म त्रयी यस्मिन् प्रतिष्ठिता ।
स गुह्योऽन्यस्त्रिवृद्वेदो यस्तं वेद स वेदवित् ॥ ११.२६५
वेदाभ्यासस्तपो ज्ञानमिन्द्रियाणां च संयमः ।
अहिंसा गुरुसेवा च निःश्रेयसकरं परम् ॥ १२.८३
वैदिके कर्मयोगे तु सर्वाण्येतान्यशेषतः ।
अन्तर्भवन्ति क्रमशस्तस्मिंस्तस्मिन् क्रियाविधौ ॥ १२.८७
सुखाभ्युदयिकं चैव नैःश्रेयसिकमेव च ।
प्रवृत्तं च निवृत्तं च द्विविधं कर्म वैदिकम् ॥ १२.८८
यथोक्तान्यपि कर्माणि परिहाय द्विजोत्तमः ।
आत्मज्ञाने शमे च स्याद्वेदाभ्यासे च यत्नवान् ॥ १२.९२
पितृदेवमनुष्याणां वेदश्चक्षुः सनातनम् ।
अशक्यं चाप्रमेयं च वेदशास्त्रमिति स्थितिः ॥ १२.९४
या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः ।
सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः ॥ १२.९५

अतः स्मृतिपठनवेलायां नेदं विस्मर्तव्यं यत्सर्वमपि श्रुतिप्रामाण्यतः परीक्षणीयमिति ।

मनुस्मृतौ द्वादशाध्यायाः, २६९४ श्लोकाश्च । अस्याः प्राचीनतमोपलब्धटीका मेधातिथिकृता । मेधातिथेः कालो नवमशताब्दी (ख्रीस्तीया) अनुमीयते । मेधातिथेः प्राग् भर्तृयज्ञपूर्वमसहायो टीकां कृतवान् । न सा प्राप्यते । भागुरियज्वादिभिः कृता अन्याष्टीका अपि मेधातिथेः पूर्वं बभूवुः । ता अपि न प्राप्यन्ते । महामहोपाध्यायकाणेमहोदयस्येदं मतं यत्—'नात्र सन्देहो वर्त्तमानमनुस्मृतिः सप्तमशताब्दी प्रामाणिकग्रन्थरूपेणाऽऽसीत् ।'[1]

इयं तु काणेमहोदयेनावरसीमा निर्धारिता । अत्र विभिन्नानां विदुषां विभिन्नानि मतानि । एल्फिन्स्टनमहोदयः कथयति—"सामाजिकदशायाः प्रथमं पूर्णचित्रं तेन धर्मशास्त्रेण ज्ञायते यन्मनुरिति नाम बिभर्ति । सम्भवतस्तस्य निर्माणं ख्रीस्तात् प्राङ् नवमशताब्द्यां जातम् ।"[2]

"डाक्टरहन्टरमहोदयोऽभिमन्यते—इदं (=इयं मनुस्मृतिः) व्यावहारिकनियमानां प्रथमसंग्रहो, ये (नियमाः) ख्रीस्तात् पूर्वं प्रायः पञ्चमशताब्द्यां प्रचलिता बभूवुः ........परन्तु वर्तमानं (श्लोकबद्धं) धर्मशास्त्रं तु प्रथम-पञ्चमशताब्द्योर्मध्य एव संगृहीतं स्यात् ।"[3]

सर डब्ल्यू. जोन्समहोदयो भणति—'बहु सम्भाव्यते यन्मनो राजनियमाः सोलनादथवा लाइकरगसादपि पर्याप्तं प्राचीनतराः स्युः । सर्वथैव संभाव्यते

---

1. "No one can doubt for a moment that the extant मनुस्मृति was an authoritative work in the seventh century." —History of धर्मशास्त्र; Vol. I, p. 150.

2. "The first complete picture of the state of society is afforded by the code of laws which bears the name of मनु and which was probably drawn in 9th century before Christ. —'History of India, (5th edition)—pages 11-12.

3. "It is a compilation of a customary law current probably about the 5th century B.C.........the present code must have been compiled between 100 and 500 A. D."—'The Indian Empire', 2nd edition, p. 113.

यल्लेखबद्धतायाः पूर्वं तेषां प्रचारस्तस्मिन् समयेऽपि स्याद् यदा मिश्रे भारते च प्रथमसाम्राज्यस्थापना बभूव ।"[1]

अथ बूलहरमहोदयोऽभिदधाति—"यथावधि ममैवं मतिर्यद् यवनकाम्बोजशक-नर्गोऽधिकतरमाश्रियेत तथास्याः कृतेः (मनुस्मृतेः) परसीमा प्रायो द्वितीयशताब्द्याः प्रारम्भेऽथवा किंचित्पूर्वं निर्धार्येत ।"[2]

एवमिमे सर्वे ऐतिहासिका अत्र परस्परं विसंवदन्ते । तथा चैषां समीपे किंचित्पुष्टप्रमाणमपि नास्ति । बूलहरमहोदयो मनुस्मृतौ 'यवने'ति शब्दं[3] दृष्ट्वा मन्यते यद् 'यूनानदेशेन सह भारतीयानां सम्पर्कानन्तरं मनुस्मृतिर्निर्मिता । अथ च सम्पर्कोऽलक्षेन्द्रस्याक्रमणानन्तरं जात' इति । अत्र इटालीदेशीय संस्कृतविदुषो गोरेशियस्य (Gorresio's) मतस्योद्धरणं पर्याप्तम्—"इदं संभाव्यते यद् भारतीयैर्यवनेतिनाम्ना प्राचीनतमासां जातीनां कृते कृतः स्याद् या भारतवर्षात्पश्चिमदिशि निवसन्ति स्म तथाच परवर्तिकालेऽर्थाद् अलक्षेन्द्रकालेऽयं शब्दो मुख्यतया यूनानदेशीयानां कृते प्रयुक्तः स्याद् ।"[4]

---

१. "The laws of मनु very probably were considerably older than those of Solon or even of Lycurgus, although the promulgation of them, before they were reduced to writing, might have been coeval with the first monarchies established in Egypt and India.—Institutes of Hindu Law, Introduction p. 10.

२. I think it so far to rely more on the mention of the यवन, कम्बोज and शक and to fix the remoter limit of the work about the beginning of the 2nd century A. D. or some what earlier."—'Laws of Manu'—G. Buhler, Introduction p. 117.

३. पौण्ड्रकाश्चौड्रद्रविडाः काम्बोजा यवनाः शकाः ।
पारदाः पह्लवाश्चीनाः किराता दरदाः खशाः ॥ —मनु०, १०.४४

४. 'The name of यवन may have been anciently used by Indians to denote the nations situated to the west of India; more recently, that is after the time of Alexander, it was applied principally to the Greeks.

—गौरेशिय(Gorresio)महोदयो रामायणानुवादभूमिकायाम् ।

# मनुस्मृतिर्महाभारतं च

मनुस्मृतौ कुत्रचिदपि महाभारतस्य महर्षिव्यासस्य वा चर्चा नास्ति, परन्तु महाभारते राजर्षिमनोर्नाम पुनः पुनः ससम्मानं प्राप्यते—

मनुनाऽभिहितं शास्त्रं यच्चापि कुरुनन्दन

अनुशासनपर्व, ४७.३४

तमेवमुक्तो भगवान् मनुः स्वायम्भुवोऽब्रवीत्

अनुशासनपर्व, ३६.५

एष धर्मविधिः पार्थ पूर्वमुक्तः स्वयम्भुवा

अनुशासनपर्व, ४७.५८

सर्वकर्मस्वहिंसां हि धर्मात्मा मनुरब्रवीत्

शान्तिपर्व (मोक्षधर्मप्रकरणम्)

अत्रायं तर्कः प्रस्तोतुं शक्यते यत्कामं मनुर्महाभारतात्पूर्ववर्ती स्यात्पर श्लोकबद्धा मनुस्मृतिः परवर्तिनि कालेऽपि भवितुं शक्नोति ।

अत्र कश्चिदभिनिविष्टश्लोको विचार्यः —

अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम् ।
तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति ॥

मनुस्मृतिः ९.३२१

अयं श्लोको महाभारते शान्तिपर्वणि (५६.२४) प्राप्यते । अतः पूर्वं तत्रैव (महाभारते शान्तिपर्वणि ५६.२३) कथितं—

मनुना चैव राजेन्द्र गीतौ श्लोकौ महात्मना

एतदतिरिक्तं मनुस्मृतेरधोनिर्दिष्टश्लोका महाभारते प्राप्यन्ते—

| मनुस्मृतिः | महाभारतम् | |
|---|---|---|
| ११.७ | शान्तिपर्व | १६५.५ |
| ११.१४ | शान्तिपर्व | १६५.९ |
| ११.१८० | शान्तिपर्व | १६५.३७ |
| ६.४५ | शान्तिपर्व | २४५.१५ |
| ३.१२० | अनुशासनपर्व | १०४.६४ |

मनुस्मृतेरधोलिखितश्लोकाः अल्पपरिवर्तनैः सह महाभारते प्राप्यन्ते—

| मनुस्मृतिः | महाभारतम् | |
|---|---|---|
| २.१५७ | शान्तिपर्व | ३६.४७ |
| ११.४ | " | १६५.८ |
| ११.१२ | " | १६५.७ |
| ११.३७ | " | १६५.३२ |
| ८.३७२ | " | १६५.६३ |
| २.२३१ | " | १०८.७ |
| ९.३ | अनुशासनपर्व | ४६.१४ |
| ३.५५ | " | ४६.३ |

## मनुस्मृतिर्वाल्मीकिरामायणं च

रामायणे किष्किन्धाकाण्डेऽधोलिखितास्त्रयः श्लोकाः प्राप्यन्ते—

श्रूयते मनुना गीतौ श्लोकौ चारित्रवत्सलौ ।
गृहीतौ धर्मकुशलैस्तथा तच्चरितं मया ॥ ३० ॥
राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः ।
निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा ॥ ३१ ॥
शासनादपि मोक्षाद्वा स्तेनः पापात्प्रमुच्यते ।
राजा त्वशासन् पापस्य तदवाप्नोति किल्बिषम् ॥ ३२ ॥

किष्किन्धाकाण्डम्, १८.३०-३२

इमौ (३१, ३२) श्लोकौ किंचित्परिवर्तनेन सह मनुस्मृतौ (८.३१८, ३१६) प्राप्येते । अत्रापीदं विचार्यं यन्मनुस्मृतौ श्रीरामचन्द्रस्य वाल्मीकेर्वा चर्चा न प्राप्यते ।

एवं श्लोकबद्धा मनुस्मृतिर्महाभारताद् रामायणाच्च पूर्वतनकाले सिध्यति । अत्र निरस्तपक्षपातमतिभिर्विपश्चिद्भिर्मनीषिभिर्मननं विधेयम् ।

## मनुस्मृतौ परस्परविरुद्धमतानि

क्वचित् क्वचित्परस्परनितान्तविरुद्धमतानि लोचनगोचरीभवन्ति । उदाहरणार्थम्—

नाकृत्वा प्राणिनां हिंसां मांसमुत्पद्यते क्वचित् ।
न च प्राणिवधः स्वर्ग्यस्तस्मान्मांसं विवर्जयेत् ॥

मनु० ५.४८

सुरां पीत्वा द्विजो मोहादग्निवर्णां सुरां पिबेत् ।
तया स काये निर्दग्धे मुच्यते किल्बिषात्ततः ॥

मनु० ११.९०

एतद्विरुद्धमधोलिखितश्लोकः —

न मांसभक्षणे दोषो न मद्ये न च मैथुने ।
प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला ॥

मनु० ५.५६

अधोलिखितास्त्रयः श्लोकाः स्पष्टं प्रतिपादयन्ति यत्कर्मणा ब्राह्मणो (ब्राह्मणादिको) भवतीति—

यथा काष्ठमयो हस्ती यथा चर्ममयो मृगः ।
यश्च विप्रोऽनधीयानस्त्रयस्ते नाम बिभ्रति ॥

मनु० २.१५७

योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥

मनु० २.१६८

शूद्रो ब्राह्मणतामेति ब्राह्मणश्चैति शूद्रताम् ।
क्षत्रियाज्जातमेवं तु विद्याद्वैश्यात्तथैव च ॥

मनु० १०.६५

एतद्विरुद्धा अधोलिखितश्लोकौ—

अविद्वांश्चैव विद्वांश्च ब्राह्मणो दैवतं महत् ।
प्रणीतश्चाप्रणीतश्च यथाग्निर्दैवतं महत् ॥

मनु० ९.३१७

एवं यद्यप्यनिष्टेषु वर्तन्ते सर्वकर्मसु ।
सर्वथा ब्राह्मणाः पूज्याः परमं दैवतं हि तत् ॥

मनु० ९.३१९

एवं सति कोऽत्र निर्णयः ? को निकषः ? निकषो मनुस्मृतौ बहुषु श्लोकेषु प्रदत्तः । उदाहरणार्थं—

सर्वं तु समवेक्ष्येदं निखिलं ज्ञानचक्षुषा ।
श्रुतिप्रामाण्यतो विद्वान् स्वधर्मे निविशेत वै ॥

मनु० २.८

प्रत्यक्षं चानुमानं च शास्त्रं च विविधागमम् ।
त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता ॥

मनु० १२.१०५

आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना ।
यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः ॥

मनु० १२.१०६

वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।
एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम् ॥ २.१२

धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः । मनु०, २.१३

एवं यत्किंचिदपि वेदविरुद्धं प्रमाणविरुद्धं सदाचारविरुद्धं च कुत्रचिदप्यस्ति न तत्स्वीकरणीयम् । सर्वे चैतादृशाः श्लोकाः प्रक्षेपरूपेण मन्तव्याः । अथवा दिग्देशकालाद्यनुसारं कापि संगतिरन्वेष्टव्या ।

अत्रेदं निश्चेयं मनसि प्रेक्षावद्भिर्यन्नेदमन्तरं जातिगतम् । इदं तु सदाचार-दुराचारयोरन्तरम् ।

शूद्रः कः ? यः स्वासामर्थ्येन ब्राह्मणक्षत्रियवैश्याभिधानेषु त्रिषु वर्णेषु स्थानं लब्धुं न पारयति स एव शूद्रः । न कश्चिदपि समाजे बलाच्छूद्रीक्रियते । प्राह भगवान्मनुः —

**शूद्रो ब्राह्मणतामेति ब्राह्मणश्चैति शूद्रताम् ।**
**क्षत्रियाज्जातमेवं तु विद्याद्वैश्यात्तथैव च ॥** (१०.६५)

अनेनैव सिध्यति यत्कर्मानुसारमेव अभूत् सर्वा व्यवस्था । मनुस्मृतौ यद्येतद्-भावविरोधिनः श्लोका अपि प्राप्यन्ते, निर्विवादं प्रक्षिप्तास्ते यतस्ते वेदमत-विरोधिनः । श्रुतेरेव प्रामाण्यं सर्वथैव निजगाद मनुः —

**सर्वं तु समवेक्ष्येदं निखिलं ज्ञानचक्षुषा ।**
**श्रुतिप्रामाण्यतो विद्वान् स्वधर्मे निविशेत वै ॥** (२.८)

तथा च

**धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः** (२.१३)

तथा च

**वेदोऽखिलो धर्ममूलम्** (२.६)

प्राह च भगवान्वेदः —

**यथेमां वाचं कल्याणीमावदानि जनेभ्यो ब्रह्मराजन्याभ्यां शूद्राय चार्याय च स्वाय चारणाय ।** (यजुर्वेदः २६.२)

इयं वेदवाणी सर्वेभ्योऽस्ति । शूद्राणामपि वेदाध्ययनाधिकारः । निर्विवादं बीजस्य (heredity) प्रभावोऽपि भवति, परन्तु तपसा कर्मणा च शूद्रो ब्राह्मणतां तदभावे च ब्राह्मणः शूद्रतां गच्छति—

**तपोबीजप्रभावैस्तु ते गच्छन्ति युगे युगे ।**
**उत्कर्षं चापकर्षं च मनुष्येष्विह जन्मतः ॥**

(१०.४२)

## ब्राह्मणधर्मः

को हि ब्राह्मणपदभाग् भवितुमर्हति ? —

स्वाध्यायेन व्रतैर्होमैस्त्रैविद्येनेज्यया सुतैः ।
महायज्ञैश्च यज्ञैश्च ब्राह्मीयं[1] क्रियते तनुः ॥

(२.२८)

ब्राह्मणगुणधारणेनैव नरो ब्राह्मणो भवति । मनुस्मृतौ विस्पष्टं ब्राह्मणस्वरूपं वर्णितम्—

सम्मानाद् ब्राह्मणो नित्यमुद्विजेत विषादिव ।
अमृतस्येव चाकाङ्क्षेदवमानस्य सर्वदा ॥ (२.१६२)
वेदमेव सदाऽभ्यस्येत्तपस्तप्स्यन् द्विजोत्तमः ।
वेदाभ्यासो हि विप्रस्य तपः परमिहोच्यते ॥ (२.१६६)
सर्वान् परित्यजेदर्थान् स्वाध्यायस्य विरोधिनः ।
यथा तथाऽध्यापयंस्तु सा ह्यस्य कृतकृत्यता ॥ (४.१७)
अध्यापनमध्ययनं यजनं याजनं तथा ।
दानं प्रतिग्रहश्चैव षट् कर्माण्यग्रजन्मनः ॥ (१०.७५)
प्रतिग्रहसमर्थोऽपि प्रसङ्गं तत्र वर्जयेत् ।
प्रतिग्रहेण ह्यस्याशु ब्राह्मं तेजः प्रशाम्यति ॥ (४.१८६)
वेदाभ्यासस्तपो ज्ञानमिन्द्रियाणां च संयमः ।
अहिंसा गुरुसेवा च निःश्रेयसकरं परम् ॥ (१२.८३)
धर्मेणाधिगतो यैस्तु वेदः सपरिबृंहणः ।
ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतवः ॥ (१२.१०९)

## क्षत्रियधर्मः

प्रजानां रक्षणं दानमिज्याऽध्ययनमेव च ।
विषयेष्वप्रसक्तिश्च क्षत्रियस्य समासतः ॥ (१.८९)

---

१. अनेनैवमेवं यदन्यथा कस्यचिदपि तनुर्ब्राह्मी भवितुं नार्हति ।

### वैश्यधर्मः

पशूनां रक्षणं दानमिज्याध्ययनमेव च ।
वणिक्पथं कुसीदं च वैश्यस्य कृषिमेव च ॥ (१.९०)

पुनर्मनुस्मृतौ नवमाध्याये वैश्यकर्मणां चर्चा प्राप्यते तथा चात्र उपदिष्टम्—

धर्मेण च द्रव्यवृद्धावातिष्ठेद्यत्नमुत्तमम् ।
दद्याच्च सर्वभूतानामन्नमेव प्रयत्नतः ॥ (९.३३३)

### शूद्रः

शूद्रो वर्णो नास्ति । न कश्चिद् शूद्रत्वस्य वरणं करोति । परिशेषाच्छूद्रो भवति । तस्य धर्मः सर्वेषां सेवा ।

## आश्रमव्यवस्था

**ब्रह्मचर्याश्रमः**—यज्ञोपवीतसंस्कारः प्रायोऽष्टमवर्षात्तो द्वादशवर्षपर्यन्तमभूत् ।[1] अतितीक्ष्णबुद्धीनां पञ्चमे षष्ठे वा वर्षे एवाभूत् । मन्दबुद्धीनां चतुर्विंशेऽपि वर्षेऽभूत् । सर्वदेवोन्नतेरवसर आसीत् । गुरुकुलवासोऽनिवार्य आसीत् । गुरोर्महामहत्त्वमासीत्—

य आवृणोत्यवितथं ब्रह्मणा श्रवणावुभौ ।
स माता स पिता ज्ञेयस्तं न द्रुह्येत् कदाचन ॥[2]
गुरोर्यत्र परीवादो निन्दा वापि प्रवर्तते ।
कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः ॥[3]

### गृहस्थाश्रमः

मनुस्मृतौ गृहस्थाश्रमो महागरिमामयः स्मृतः —

यथा नदीनदाः सर्वे सागरे यान्ति संस्थितिम् ।
तथैवाश्रमिणः सर्वे गृहस्थे यान्ति संस्थितिम् ॥[4]

---

१. २—३६, ३७ ३८, ४०.
२. २.१४४
३. २.२२०
४. ६.९०

यथा वायुं समाश्रित्य वर्तन्ते सर्वजन्तवः ।
तथा गृहस्थमाश्रित्य वर्तन्ते सर्व आश्रमाः ॥[१]
यस्मात्त्रयोऽप्याश्रमिणो दानेनान्नेन चान्वहम् ।
गृहस्थेनैव धार्यन्ते तस्माज्ज्येष्ठाश्रमो गृही ॥[२]

सुसन्तानोत्पत्तये स्त्रीपुरुषयोः परस्परं प्रेम परमावश्यकम् । कन्या च सदा गुणवत एव पुरुषाय देया । यदि गुणवान् वरो न प्राप्यते तदा कामं साऽऽजीवनमनूढा पितृगृहे तिष्ठेत्, परन्तु नैव देया—

उत्कृष्टायाभिरूपाय वराय सदृशाय च ।
अप्राप्तामपि तां तस्मै कन्यां दद्याद्यथाविधि ॥[३]
काममामरणात्तिष्ठेद् गृहे कन्यर्तुमत्यपि ।
न चैवैनां प्रयच्छेत्तु गुणहीनाय कर्हिचित् ॥[४]

विवाहस्य प्रयोजनं सुसन्तानोत्पत्तिः :—

प्रजनार्थं महाभागाः पूजार्हा गृहदीप्तयः ।
स्त्रियः श्रियश्च गेहेषु न विशेषोऽस्ति कश्चन ॥

मनु० ९.२६

उत्पादनमपत्यस्य जातस्य परिपालनम् ।
प्रत्यहं लोकयात्रायाः प्रत्यक्षं स्त्री निबन्धनम् ॥

मनु० ९.२७

उत्कृष्टसन्तानोत्पत्त्यर्थं स्त्री गुणवती स्यात् । परन्तु भर्त्रा ततोऽप्यधिकं गुणवता भाव्यं, यत :—

यादृग्गुणेन भर्त्रा स्त्री संयुज्येत यथाविधि ।
तादृग्गुणा सा भवति समुद्रेणेव निम्नगा ॥ मनु० ९.२२

---

१. ३.७७
२. ३.७८
३. ९.८८
४. ९.८९

उत्कर्षं योषितः प्राप्ताः स्वैः स्वैर्भर्तृगुणैः शुभैः

मनु० ९.२४

अतो गृहस्थाश्रमे पुरुषस्योत्तरदायित्वमधिकतरम् ।

## वानप्रस्थसंन्यासाश्रमौ

गृहस्थाश्रमानन्तरं वानप्रस्थाश्रमो गभीरसाधनार्थं सेवनीयः

एवं गृहाश्रमे स्थित्वा विधिवत्स्नातको द्विजः ।
वने वसेत्तु नियतो यथावद्विजितेन्द्रियः ॥

मनु० ६.१

गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः ।
अपत्यस्यैव चापत्यं तदारण्यं समाश्रयेत् ॥

मनु० ६.२

स्वाध्याये नित्ययुक्तः स्याद्दान्तो मैत्रः समाहितः ।
दाता नित्यमनादाता सर्वभूतानुकम्पकः ॥

मनु० ६.८

पुनर्वानप्रस्थाश्रमानन्तरं संन्यासाश्रमे प्रवेशः :—

वनेषु च विहृत्यैवं तृतीयं भागमायुषः ।
चतुर्थमायुषो भागं त्यक्त्वा सङ्गान्परिव्रजेत् ॥

मनु० ६.३३

संन्यासी मोक्षपदाधिकारी—

यो दत्त्वा सर्वभूतेभ्यः प्रव्रजत्यभयं गृहात् ।
तस्य तेजोमया लोका भवन्ति ब्रह्मवादिनः ॥

मनु० ६.३९

इन्द्रियाणां निरोधेन रागद्वेषक्षयेण च ।
अहिंसया च भूतानाममृतत्वाय कल्पते ॥

मनु० ६.६०

यदा भावेन भवति सर्वभावेषु निःस्पृहः ।
तदा सुखमवाप्नोति प्रेत्य चेह च शाश्वतम् ॥

मनु० ६.८०

# मनुस्मृतौ नारी

'न स्त्री स्वातन्त्र्यमर्हती'ति मनोर्निगदितमुद्धृत्योद्धृत्य भणन्ति केचिन्मनुः स्त्रीनिन्दक' इति । प्रथममयं श्लोक एव विचार्यः :—

पिता रक्षति कौमारे भर्ता रक्षति यौवने ।
रक्षन्ति स्थविरे पुत्रा न स्त्री स्वातन्त्र्यमर्हति ॥

मनु० ९.३

अत्र 'रक्षती'त्यस्य तात्पर्यमिदं नास्ति यद् 'बन्धने स्थापयति' । रक्षणीया हि स्त्री । अबला खलु सा । कोऽत्र विसंवदेत । भावनाप्रधाना (हृदयप्रधाना) नारी । अनया भावनयैव वात्सल्यस्य शिशोः कृते तपोमयी माता भवति, पुरुषस्य कृते स्वप्नलोकनिर्मात्री प्रेयसी जीवनसङ्गिनी भवति । अनया भावनयैव सा स्नेहसूत्रधारिणी भगिनी भवति, पितुश्च 'जीवितसर्वस्वं' दुहिता भवति । एवमियं भावनैव तस्याः कृते रक्षकमाकारयति । न बुद्धिप्रधाना नारी । बुद्धिप्रधाना स्त्री प्रायः पुरुष इव पुरुष एव वा भवति । मनुदृष्ट्या मानवदृष्ट्या चेदं भावनाप्रधानत्वं नार्या न चोपहास्यास्पदम् । इदं पूजनीयं, महापूजनीयम् । मनुरेवावोचत्—

पितृभिर्भ्रातृभिश्चैताः पतिभिर्देवरैस्तथा ।
पूज्या भूषयितव्याश्च बहुकल्याणमीप्सुभिः ॥
यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः ।
यत्रैतास्तु न पूज्यन्ते सर्वास्तत्राफलाः क्रियाः ॥

मनु० ३.५५-५६.

तथा च पूज्यतमा माता—

उपाध्यायान्दशाचार्य आचार्याणां शतं पिता ।
सहस्रं तु पितॄन् माता गौरवेणातिरिच्यते ॥

मनु० २.१४५

नारी पूज्या माता । पुनर्न स्वातन्त्र्यमर्हतीत्यस्य किं तात्पर्यम् ? तात्पर्यमिदं यदियं मृदुलभावना सुदृढबुद्ध्या रक्षणीया । इदं सुन्दरं चित्रं दृढेन काचेन काष्ठेन वा निर्मितेन वेष्टनेन संरक्षणीयम् । अयं मधुरसो काचनिर्मिते मृण्मये धात्वादिनिर्मिते वा सुदृढपात्रे रक्षणीयः । इयं महाशक्तिमती विद्युल्लौहतारेषु संरक्षणीया । महत्त्वं कस्याधिकतरम् ? भावनाया बुद्धेर्वा, चित्रस्यावेष्टनस्य वा, रसस्य पात्रस्य वा, विद्युतो ताराणां वा ? विचारयन्त्वत्र विगलत्तमःशेमुषीका मनूर्वशिनो मनोज्ञा मनीषिणः । महामूल्यममूल्यं वा वर्तते नारीरत्नम् । अतो रक्षणीयं सुरक्षणीयं संरक्षणीयं च ।

नार्याः कार्यक्षेत्रं गृहमस्ति—

न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते

कविकुलगुरुरपि रघुवंशे गृहिणीत्वमहत्त्वं प्रख्यापयति । दिवङ्गतामिन्दुमतीं विलपन् कथयति महाराजोऽजः —

गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ ।

रघु० ८.६७

गृहिणीपदमेव नार्या ईप्सितव्यम्—

यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः

अभिज्ञानशाकुन्तलम् ४.१८

गृहकार्यस्य महत्त्वं बहिःक्षेत्रे कृतकार्यान्न्यूनतरं नास्ति किञ्चिज्ज्याय एवास्ति । गृहिणी सर्वत्र सा विश्ववन्द्या माता भवति, स्वर्गादपि गरीयसी भवति, किंच देवेषु प्रथमो देवो भवति[1] । कार्यालयेषु सचिवालयेषु वा सेवाकार्यं विदधती नारी प्रायो नारीत्वं जहाति । तत्र हि प्रायो नारीसुलभकोमलभावना विकला भवति । न सा तिष्ठति भावनैकरसा गृहनिर्मात्री परिवारधात्री च । महर्षिः कण्वो गृहिणीपदप्राप्तिमेव परमं श्रेयो मन्यते । मनुरपि मुहुर्मुहुरिदमेव कथयति—

प्रजनार्थं महाभागाः पूजार्हा गृहदीप्तयः ।
स्त्रियः श्रियश्च गेहेषु न विशेषोऽस्ति कश्चन ॥

मनु० ९.२६

---

१. मातृदेवो भव, पितृदेवो भव, आचार्यदेवो भव

भारतीयवत्तथा नार्याः क्षेत्रं गृहमेवोद्घोषयन्ति । बहवो वैदेशिकविद्वांसो-ऽपि तस्याः क्षेत्रं गृहं मन्यन्ते तां च भावनाप्रधानामुद्घोषयन्ति । कानिचिदुद्-धरणानि प्रस्तूयन्ते—

लैमरटाइन महोदयः —

नारीणां सर्ववैशिष्ट्यं तासां हृदि न्यधात्प्रभुः ।
भवन्ति प्रेमकार्याणि ह्येतद्वैशिष्ट्यजानि भोः ॥[1]

[illegible]महोदयः —

नार्यस्तावन्न कुर्वन्ति ह्यन्वर्थमत्र शासनम् ।
नोरीकुर्वन्ति यावत्ता आज्ञापालनबन्धनम् ॥
स्युस्तासां पादयोर्लोके पुरुषाः पतिता यदा ।
दासत्वस्य तदा तासां महाभयं महाभयम् ॥[2]

कविटेनीसनमहोदयः —

नृ-भूयुगलवत् ह्यन्तरं स्यान्महत्तमम् ।
परं नारीषु तद्धि स्यात् स्व-रसातलयोरिव ॥[3]

श्रीमती एच्. आर्. हैवीस महोदया—

पत्नी माता च भूत्वा हि नारी सफलजन्मिनी ।[4]
मुकुटालङ्कृता सैव सम्राज्ञी भवतीह ह ॥

---

1. God has placed the genius of women in their hearts; because works of their genius are always works of love. —Lamartine.

2. Women never truly command, till they have given their promise to obey, and they are never in more danger of being made slaves, than when the men are at their feet.

3. Men at most differ as heaven and earth; but women worst and best, as heaven and hell.—Tennyson.

4. She (the single woman) is never fulfilling the part nature intended her to fulfil; but the wife and the mother is the crowned queen.—Mrs. H. R. Haweis.

पारस्यदार्शनिकः शेखसादीमहोदयः —

रत्नं हि सुन्दरी नारी साधुर्नारी निधिः स्मृता ।[1]

फ्रांसदेशीयो दार्शनिको रूसोमहोदयः —

शोभा ह्येषैव नार्या भो अज्ञाता भुवि तिष्ठतु ।
सम्राज्ञी स्वगृहे सा स्यात्पतिकुटुम्बपूजिता ॥
आदरं यं पतिः कुर्यात् तद्धि तस्याः सुगौरवम् ।
परिवारः सुखी तिष्ठेत्तस्या आनन्द एव हि ॥[2]

सी. ए. स्टोड्डर्डमहोदयः —

श्रेष्ठमातावलम्बिन्या नार्या महत्त्वकाङ्क्षणम् ।
इतोऽधिकं हि लोके भो भवितुमर्हतीह नो ॥
पत्नी पतिव्रता, माता हृष्टा तेजोयुताखिला ।
इदं स्थानं हि नार्यर्थं प्रभुणा निश्चितं ध्रुवम् ॥
सुपत्नी च सुमाता च या नारी भूतसाधिका ।
नराणां विश्वविख्यातानामपमहत्वती मता हि सा ॥[3]

आङ्ग्लसुकविर्लार्डटेनिसनमहोदयः —

शूरत्वे राजनीतौ वा बंधुत्वे विश्रुता हि याः ।
त्यक्त्वा नार्यः स्वकार्यं ताः नरकार्यार्थमुत्सुकाः ॥

---

1. A handsome woman is a jewel; a good woman is a treasure.

2. The dignity of woman consists in being unknown to the world.—Her glory is the esteem of her husband; her pleasure the happiness of her family.

3. There can be no higher ambition for a woman than to be a faithful wife and a happy and influential mother. It is the place which God has given woman, and she who fills it well, is as honorable and honored as the most illustrius man can be.—C. A. Stoddard.

या बिभर्ति गदां भैमीं क्षम्या मे सा न सुन्दरी ।
यथा नरो न क्षम्यो यस्तस्यास्तकुं प्रचालयेत् ॥[1]

ब्रुयेरेमहोदय: —

सदा सीमाग्रवार्तिन्यः सीमन्तिन्यो न मध्यगाः ।
नराच्छ्रेष्ठतरा वा स्युः स्युर्वा हीनतरा हि ताः ॥[2]

शेक्सपीयरमहोदय: —

दर्पयति भुवि ता हि सौन्दर्यं प्रायशः खलु ।
अर्च्यतमा गुणैः सा स्याद्दिव्या सा भाति लज्जया ॥[3]

शेरिडनमहोदय: —

यावत्सुसंस्कृतं चित्तं नारीणां भुवि जायते ।
तावद्धि बुद्धिमन्तो भो भविष्यन्त्यधिकं नराः ॥[4]

---

1. Women famed for their valor, their skill in politics, or their learning, leave the duties of their own sex, in order to invade the privileges of ours. I can no more pardon a fair one for endeavoring to wield the club of Hercules than I could a man for endeavoring to twirl her distaff. —Goldsmith.

2. Women are ever in extremes; they are either better or worse than men.—Bruyère.

3. 'T is beauty, that doth oft make women proud; 't is virtue, that doth make them most admired; 't is modesty, that makes them seem divine.—Shakespeare.

4. The more they (women) are enlightened, so much the more we shall be. On the cultivation of the minds of women, depends the wisdom of man.—Sheridan.

विक्टरह्यू.गोमहोदयः —

क्रीडनका हि जायन्ते नार्या अत्र करे नराः ।
असुराणां करे नारी क्रीडनकं हि जायते ॥[1]

युरिपिडिसमहोदयः —

मूका पुता ह्यविज्ञाता शान्ता तिष्ठति या गृहे ।
इयं स्तुतिर्हि नार्या भो सत्या गीता सुरैरपि ॥[2]

बुलवरमहोदयः —

प्रायशः सर्वदा नारी हृदा युक्ति करोति हि ।
शते षट्षष्टिरतस्तस्याः कष्टानि भ्रान्तयश्च भोः ॥[3]

स्टीलमहोदयः —

कर्त्तव्यं भुवि नार्या भोः सर्वमत्र समाप्यते ।
कर्त्तव्यानि हि कुर्यात्सा पुत्र्या मातुः स्वसुर्जनेः ॥[4]

ओ. डब्ल्यू. होम्समहोदयः —

रोचन्ते भावनामय्यो नार्यो लोके यथा तथा
बुद्धिमय्यो न; श्वेताद्धि रक्तं श्रेयो नु पाटलम् ॥[5]

---

1. Men are women's playthings; woman is the devil's.
—Victor Hugo.

2. For a silence and a chaste reserve is woman's genuine praise; and to remain quiet within the house.—Euripides.

3. A woman too often reasons from her heart; hence two-third of her mistakes and troubles.—Bulwer.

4. All a woman has to do in this world is contained within the duties of a daughter, a sister, a wife, and a mother.
—Steele

5. The brain women never interest us like the heart women ; white roses please less than red.—O. W. Holmes.

ड्राइडनमहोदयः —

प्रतिष्ठा भुवि नार्या भो ऊर्णा हिमनिर्मला ।
मृत्तिकाया लवोऽप्यत्र सह्यते न कदाचन ॥[1]

लैमटाईनमहोदय :—

हृदयं कल्पना चैव नार्योऽत्र धारयन्त्युभे ।
पुरुषेभ्योऽधिकं भूयो नार्यो हि हृन्मयाः स्मृताः ॥[2]

कोल्टनमहोदय :—

यथा ह्यत्र नराः प्रायः कुर्वन्त्यौचित्यलङ्घनम्
न नार्यः; किन्तु कुर्वन्त्यो यदा, सीमा न तिष्ठति ॥[3]

वाल्टेयरमहोदयः —

युक्तयो बह्वयो लोके क्रियन्ते या नरैः सदा ।
अतिशेते हि ता एका नार्या हृदयभावना ॥[4]

कुमारी ईवन्समहोदया—

दयनीयो नरो ह्यत्र न धर्मो यस्य विद्यते ।
परं भयङ्करा नारी नेश्वरविश्वासिनीह या ॥[5]

---

1. Woman's honor is nice as ermine, will not bear a soil.—Dryden.

2. Women have more heart and more imagination than men.—Lamartine.

3. Women do not trangress the bounds of decorum so often as men; but when they do they go greater length.—Colton.

4. All the reasonings of men are not worth one sentiment of women.—Voltaire.

5. A man without religion is to be pitied, but a godless woman is a horror above all things.—Miss Evens.

श्रीमती केम्बलमहोदया—

स्युः पत्न्यो मातरश्चैव लोकेऽस्मिन् हि कुमारिकाः ।
स्त्रीसत्ताया इदं सर्वं लक्ष्यं पूततमं स्मृतम् ॥[1]

ब्यूफोर्टमहोदयः —

भविष्यं हि समाजस्य जननीनां करे स्थितम्[2]

लूथरमहोदयः —

नास्ति मृदुतरं लोके स्त्रीहृदयाद्धि किञ्चन ।
दिव्यपवित्रतायास्तद् यदा हि धाम जायते ॥[3]

बर्टोलमहोदयः —

न रक्षां याचते या सा नास्ति स्त्री, मे इदं मतम् ।[4]

एवं शतश उद्धरणानि प्रस्तोतुं पार्यन्ते । नार्याः क्षेत्रं गृहम् । सा स्वभावतो भावनामयी । नियन्त्रणं तस्या अनिवार्यं भवति यथा बहुभावनाशीलस्य पुरुषस्यापि । अपवादरूपेण काचिन्नारी भावनाक्षेत्रं त्यक्त्वा शुष्कबुद्धिक्षेत्राध्यासिता भवति, न तस्या नियन्त्रणं विधेयं ।

वेदेषु ब्राह्मणेषु रामायणमहाभारतयोः स्मृतिषु च सर्वत्र पूजार्हा कीर्तिता नारी । यत्र कुत्रचिद् दोषवर्णनमिव प्रतिभाति तत्सर्वं नारीभावुकस्वभावमधिकृत्य । अथवा तत्प्रक्षेपरूपं मन्तव्यम् ।

नार्याः पूजार्हत्वं निर्विवादं यतः सा माता । यतः सा माताऽतस्तस्याः सुशिक्षितत्वमप्यनिवार्यम् । माता निर्माता (निर्मात्री) भवति । विना शिक्षया

---

1. Maids must be wives and mothers to fulfil the entire and holiest end of woman's being.—Mrs. Kemble.

2. The future of society is in the hands of mothers. —Beaufort.

3. Earth has nothing more tender than a woman's heart when it is the abode of piety.—Luther.

4. She is no woman who......asks no protection. —Bartol.

सा कथं निर्माणं करिष्यति । शिक्षायाः प्रयोजनमिदमेव नास्ति यज्जनः कुत्र-चित् सेवाकार्यमार्गेण करोतु । शिक्षया मानवो वस्तुतो मानवपदभाग् भवति । नारी पुरुषस्य सखी । प्राह कविकुलगुरुः—

**गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ**

रघुवंशम् ८.६७

विवाहसंस्कारे सप्तपद्यामन्तिमपदस्यान्त इदं पठ्यते—

**सखे सप्तपदी भव (साप्तपदीनं सख्यम्—पाणिनिः)**

यदि पत्न्याः पत्या सह मानसिकसाहचर्यं नास्ति तदा सुसन्तानोत्पत्तिर्न संभाव्यते । अतएव निगदति कविकुलगुरुः —

**तस्यामात्मानुरूपायामात्मजन्मसमुत्सुकः ।**

रघुवंशम् १.३३

साऽस्यानुरूपाऽऽसीदतः

**कलत्रवन्तमात्मानमवरोधे महत्यपि ।**
**तया मेने मनस्विन्या लक्ष्म्या च वसुधाधिपः ॥**

रघुवंशम् १.३२

मनस्विनी स्यान्नारी तदैव सा सुपत्नी सुजननी च भवितुं शक्ष्यति । मनस्विनीशब्दे मनुष्यशब्दे चैक एव (मन्) धातुः ।

परन्तु नार्या वैदुषी मनस्विता [illegible] कार्यं करोति । नार्या निर्मितिरेवं कृता विश्वकृता यस्याऽतिकोमलता । इयं कोमलता शिशुजननसंवर्धन-पालनादिकार्येभ्योऽनिवार्या ।

मनुः कथयति—

**पतिर्भार्यां संप्रविश्य गर्भो भूत्वेह जायते ।**
**जायायास्तद्धि जायात्वं यदस्यां जायते पुनः ॥**

मनु० ९.८

तथा च

विशिष्टं कुत्रचिद् बीजं स्त्रीयोनिस्त्वेव कुत्रचित् ।
उभयं तु समं यत्र सा प्रसूतिः प्रशस्यते ॥

मनु० ९.३४

आत्मैव पतिर्वंशं प्रविश्य पुनर्जायते तस्मात् तदनुकूलमेव स्यात् । 'उभयं तु समं यत्रे'ति कथयित्वा मनुः स्त्रियाः पुरुषसममेव सर्वविधाधिकारं निर्दिशति । कथयति भगवान् वेदः —

ब्रह्मचर्येण कन्या युवानं विन्दते पतिम् ।

अथर्व० ११.५.१८

अनेन सिध्यति यद् ब्रह्मचर्यं (वेदाभ्यासादिकं) कन्यानां कृतेऽप्यनिवार्यमासीत् । अतोऽत्र सुशिक्षिताऽभून्नारी । कालिदाससमयेऽपि सा परम्परा प्राप्यते—

स्थिरोपदेशामुपदेशकाले प्रपेदिरे प्राक्तनजन्मविद्याः ।

कुमा० १.३०

नारी पूज्यतमेति तु मनुना मुहुर्मुहुर्निगदितम् ।

वेदेषु नारी सम्राज्ञीति कथिता । प्रतिविवाहसंस्कारं पठ्यन्त इमान्याशीर्वचांसि—

सम्राज्ञी श्वशुरे भव सम्राज्ञी श्वश्र्वां भव ।
ननान्दरि सम्राज्ञी भव सम्राज्ञी अधिदेवृषु ॥[1]

ऋग्वेदः १०.८५.४६ (किंचित्पाठभेदेनाथर्ववेदे १४.१.४४)

नारी संमोहनमयी । अतो ये पुरुषा ब्रह्मचर्यं स्वेन्द्रियसंयमं चेच्छन्ति ते तस्या दूरमेव तिष्ठन्तु । अन्यथा ते विगतसंयमा भवेयुः । अतएव कथयति मनुर्यद् युवा शिष्यो युवत्या गुरुभार्याया चरणस्पर्शं न करोतु—

स्वभाव एष नारीणां नराणामिह दूषणम्

किमियं नारीनिन्दा ?—यदि कश्चित्कथयेत्—

स्वभाव एष वह्नेर्हि नराणामिह दाहनम्

किमत्र वह्निनिन्दा ? मनुना तु

---

१. विस्तरायास्मिन् पुस्तके एतच्छ्लोकव्याख्या द्रष्टव्या ।

मनोविज्ञानसम्मतं सत्यं कथितं, केवलं नार्याः सम्मोहनत्वं प्रदर्शितम् । मनुरेव कथयति—

> मात्रा स्वस्रा दुहित्रा वा न विविक्तासनो भवेत् ।
> बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति ॥ २.२.१५

किमत्र नारीनिन्दा ? उत वा विदुषः (पुरुषस्य) निन्दा ? न कस्यचिदपि, केवलं मनोविज्ञानसत्योद्घाटनमेव ।

एवमनुमतं पूज्या नारी । इयमेव च वैदिकी परम्परा ।

मया मनोज्ञं विचार उपनिबद्धो श्लोकेषु—

मातरं प्रथमं वन्दे स्वसारं तदनन्तरम् ।
जायां वन्दे ततो योगी ततो दुहितरं मृदुम् ॥ १ ॥
शम्भोरर्धाङ्गिनीं वन्दे पार्वतीं विश्वमातरम् ।
दुर्गां कालीं महामायां सर्वलोकस्य पालनीम् ॥ २ ॥
निसर्गकोमला नारी जननी लोकभावनी ।
सयत्नं पुरुषैः रक्ष्या ह्यात्मनो हितकारणात् ॥ ३ ॥
भावुकता हि नारीणां सर्वं कार्यविसाधनम् ।
सैव तासामनर्थाय ज्ञातव्यं पुरुषैरिदम् ॥ ४ ॥
भावुकतागुणेनैव नारी पूज्या बुधैः स्मृता ।
कुर्यात् किन्तु महादोषान् भावुकताऽनियन्त्रिता ॥ ५ ॥
विद्युद् बहुगुणा लोके जायते सुनियन्त्रिता ।
बहुदोषा भवेत् सैव यदा स्यादनियन्त्रिता ॥ ६ ॥
संसारचालिका विद्युल्लौहतारेषु बध्यते ।
विद्युत् स्त्री ज्ञायतामत्र लौहतारा नराः स्मृताः ॥ ७ ॥
विनैव विद्युता तारा व्यर्थमूल्या तिरस्कृताः ।
विना तारैश्च विद्युत्सा ह्यात्मलोकविनाशनी ॥ ८ ॥
मृदुः शक्तिमती नारी पुरुषेण नियम्यते ।
उभयोः संतुलेनैवाप्युपकारोऽनेन साध्यते ॥ ९ ॥
अस्थिरा चञ्चला नारी महाशक्तिर्महागुणा ।
नियन्त्र्या पूजनीया च माता जाया स्वसा सुता ॥ १० ॥

---

# मनुस्मृतिः

## कुल्लूकभट्टकृतमन्वर्थमुक्तावलीसंवलिता

### प्रथमोऽध्यायः १

मनुमेकाग्रमासीनमभिगम्य महर्षयः ।
प्रतिपूज्य यथान्यायमिदं वचनमब्रुवन् ॥ १ ॥

ॐ नमो भगवते वासुदेवाय

गौडे नन्दनवासिनाम्नि सुजनैर्वन्द्ये वरेन्द्र्यां कुले
श्रीमद्भट्टदिवाकरस्य तनयः कुल्लूकभट्टोऽभवत् ।
काश्यामुत्तरवाहिजह्नुतनयातीरे समं पण्डितै-
स्तेनेयं क्रियते हिताय विदुषां मन्वर्थमुक्तावली ॥ १ ॥

सर्वज्ञस्य मनोरसर्वविदपि व्याख्यामि यद्वाङ्मयं
युक्त्या तद्बहुभिर्यतो मुनिवरैरेतद्बहु व्याहृतम् ।
सा व्याख्यातृगुणालसैरपि कृता व्याख्या ब्रुवाणस्य मे
भक्त्या मानववाङ्मये भवभिदे भूयाद्विशेषेश्वरः ॥ २ ॥

मीमांसे बहु सेवितासि सुहृदस्तर्काः समस्ताः स्थ मे
वेदान्ताः परमात्मबोधगुरवो यूयं मयोपासिताः ।
जाता व्याकरणानि बालसखिता युष्माभिरभ्यर्थये
आप्तोऽयं समयो मनूक्तिविवृतौ साहाय्यमालम्ब्यताम् ॥ ३ ॥

द्वेषादिदोषरहितस्य सतां हिताय मन्वर्थतत्त्वकथनाय ममोद्यतस्य ।
दैवाद्यदि क्वचिदिह स्खलनं तथापि निस्तारको भवतु मे जगदन्तरात्मा ॥ ४ ॥

मानवमुक्तावल्यां ज्ञेया व्याख्या नवा मयोद्ग्रथिता ।
प्राचीना अपि रुचिरा व्याख्यातॄणामशेषाणाम् ॥ ५ ॥

मनुमेकाग्रमासीनमित्यादि ॥ अत्र महर्षीणां धर्मविषयप्रश्ने मनोः 'श्रूयताम्' (१।४) इत्युत्तरदानपर्यन्तश्लोकचतुष्टयेनास्य शास्त्रस्य प्रेक्षावत्प्रवृत्त्यङ्गभूतानि विषयसम्बन्धप्रयोजनान्युक्तानि । तत्र धर्म एव विषयः । तेन सह वचनसंदर्भरूपस्य मानवशास्त्रस्य प्रतिपाद्यप्रतिपादकलक्षणः संबन्धः । प्रमाणान्तरासंनिकृष्टस्य स्वर्गापवर्गादिसाधनस्य धर्मस्य शास्त्रैकगम्यत्वात् । प्रयोजनं तु स्वर्गापवर्गादि, तस्य धर्माधीनत्वात् । यद्यपि पत्न्युपगमनादिरूपः कामोऽप्यत्राभिहितस्तथापि 'ऋतुकालाभिगामी स्यात्स्वदारनिरतः सदा' (३।४५) इत्यृतुकालादिनियमेन सोऽपि धर्म एव । एवं चार्थार्जनमपि 'ऋतामृताभ्यां जीवेत' (४।४) इत्यादिनियमेन धर्म एवेत्यवगन्तव्यम् । मोक्षोपायत्वेनाभिहितस्यात्मज्ञानस्यापि धर्मत्वाद्धर्मविषयत्वं मोक्षोपदेशकत्वं चास्य शास्त्रस्योपपन्नम् । पौरुषेयत्वेऽपि मनुवाक्यानामविगीतमहाजनपरिग्रहाच्छ्रुत्युपग्राह्यत्वाद् वेदमूलकतया प्रामाण्यम् । तथा च छान्दोग्यब्राह्मणे श्रूयते—'मनुर्वै यत्किंचिदवदत्तद्भेषजं भेषजतायाः' इति । बृहस्पतिरप्याह—'वेदार्थोपनिबद्धत्वात्प्राधान्यं हि मनोः स्मृतम् । मन्वर्थविपरीता तु या स्मृतिः सा न शस्यते ॥ तावच्छास्त्राणि शोभन्ते तर्कव्याकरणानि च । धर्मार्थमोक्षोपदेष्टा मनुर्यावन्न दृश्यते ॥' महाभारतेऽप्युक्तम्—'पुराणं मानवो धर्मः साङ्गो वेदश्चिकित्सितम् । आज्ञासिद्धानि चत्वारि न हन्तव्यानि हेतुभिः ॥' विरोधिबौद्धादितर्केर्न हन्तव्यानि । अनुकूलस्तु मीमांसादितर्कः प्रवर्तनीय एव । अत एव वक्ष्यति (१२।१०६)—'आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना । यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः ॥' इति । सकलवेदार्थाभिमननान्मनुं महर्षय इदं द्वितीयश्लोकवाक्यवक्ष्यमाणमनेनेति वचनमब्रुवन् । श्लोकस्यादौ मनुनिर्देशो मङ्गलार्थः । परमात्मन एव संसारस्थितये सार्वज्ञैश्वर्यादिसंपन्नमनुरूपेण प्रादुर्भूतत्वात्तदभिधानस्य मङ्गलातिशयत्वात् । वक्ष्यति हि (१२।१२३)—'एतमेके वदन्त्यग्निं मनुमन्ये प्रजापतिम्' इति । एकाग्रं विषयान्तराव्याक्षिप्तचित्तम् । आसीनं सुखोपविष्टम् । इदमस्यैव महर्षिप्रश्नोत्तरदानयोग्यत्वाय । अभिगम्याभिमुखं गत्वा । महर्षयो महान्तश्च ते ऋषयश्चेति तथा । प्रतिपूज्य पूजयित्वा । यद्वा मनुना पूर्वं स्वागतासनदानादिना पूजितास्तस्य पूजां कृत्वेति

प्रतिजल्पानुकूलोपपत्ते। यथान्यायं येन न्यायेन विधानेन प्रश्नः कर्तुं युज्यते प्रणतिनम्रशिरस्त्वाञ्जलिबन्धादिना। वक्ष्यति च (२।११०)—'नापृष्टः कस्यचिद् ब्रूयान्न चान्यायेन पृच्छतः' इति। 'अभिगम्य, प्रतिपूज्य, अब्रुवन्' इति क्त्वाप्रत्ययेऽपि मनुमित्येव कर्म। अब्रुवन्नित्यत्राकथितकर्मता। ब्रुविधातोर्द्विकर्मकत्वात्॥ १॥

१. विषयान्तर से अव्याक्षिप्त चित्त वाले सुखोपविष्ट मनु के अभिमुख जाकर [मनु की] पूजा करके महर्षि यथोचित वचन [मनु को] बोले।

किमब्रुवन्नित्यपेक्षायामाह—

**भगवन्सर्ववर्णानां यथावदनुपूर्वशः।**
**अन्तरप्रभवाणां च धर्मान्नो वक्तुमर्हसि॥ २॥**

भगवन्नित्यादि॥ ऐश्वर्यादीनां 'भग' शब्दो वाचकः। तदुक्तं विष्णुपुराणे—'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा॥' इति। मनुरनेन संबोधनं भगवन्निति। वर्णा ब्राह्मणक्षत्रियवैश्यशूद्राः। सर्वे च ते वर्णाश्चेति सर्ववर्णाः, तेषामन्तरप्रभवाणां च संकीर्णजातीनां चापि अनुलोमप्रतिलोमजातानां अम्बष्ठक्षत्तृकर्णप्रभृतीनां तेषां विजातीयमैथुनसंभवत्वेन चातुर्वर्ण्यसंपर्काज्जातानामन्तरसंभवत्वादनन्तरत्वाद्वर्णशब्देनाग्रहणात्पृथक् प्रश्नः। एतेनास्य शास्त्रस्य सर्वोपकारकत्वं दर्शितम्। यथावद् यो धर्मो यस्य वर्णस्य येन प्रकारेणार्हतीत्यनेनाश्रमधर्मादीनामपि प्रश्नः। अनुपूर्वशः क्रमेण जातकर्म, तदनु नामधेयमित्यादिना। धर्मान्नोऽस्मभ्यं वक्तुमर्हसि सर्वधर्माभिधाने योग्यो भवसि तस्माद् ब्रूहीत्यर्थोऽध्याहार्यम्। ननु ब्रह्महत्यादिप्रायश्चित्तकीर्तनमप्यत्र ननु प्रायश्चित्तविधिरूपधर्मविषयत्वेन न स्वतन्त्रतया॥ २॥

---

१. ऋषयः—साक्षात्कृतधर्माण ऋषयो बभूवुः (निरुक्तम्)। मनुः—मननशीलः। ऋषयो विभिन्नानि तत्त्वानि साक्षात्कुर्वन्ति। मननेन तेषां विवेचना परस्पर तुलना सामञ्जस्यं च विधीयते। इदं च मननमेकाग्रमनसैव विधातुं पार्यते। आसीनम्—सुखोपविष्टम्—'स्थिरसुखमासनम्' (योगदर्शनम्)। एकाग्रचित्तो मननशीलः सुखोपविष्ट एव तिष्ठति। अनुवक्तृहरं 'यथान्यायं प्रतिपूज्य', अनुकुल्लूकं 'यथान्यायमभिपूज्य'। कुल्लूकः सामीप्यम्। approached इत्यनुवादः शिथिलः।

२. हे भग (समग्र ऐश्वर्य, वीर्य, यश, श्री, ज्ञान तथा वैराग्य) से युक्त [मनु], सब वर्णों के तथा बीच में होने वाली (संकीर्ण जातियों) के धर्मों को [तू] हमें क्रम से बिल्कुल ठीक-ठीक कथन करने के योग्य है (हमारी यह जिज्ञासा है और ठीक-ठीक कथन करने का सामर्थ्य तुझ में है)।

सकलधर्माभिधानयोग्यत्वे हेतुमाह—

**त्वमेको ह्यस्य सर्वस्य विधानस्य स्वयंभुवः।**
**अचिन्त्यस्याप्रमेयस्य कार्यतत्त्वार्थवित्प्रभो ॥ ३ ॥**

त्वमेक इत्यादिना ॥ हिशब्दो हेतौ। यस्मात्त्वमेकोऽद्वितीयः अस्य सर्वस्य प्रत्यक्षश्रुतस्य स्मृत्याद्यनुमेयस्य च विधानस्य विधीयन्तेऽनेन कर्माण्यग्निहोत्रादीनीति विधानं वेदस्तस्य स्वयंभुवोऽपौरुषेयस्याचिन्त्यस्य बहुशाखाविभिन्नत्वादियत्तया परिच्छेत्तुमशक्यस्य, अप्रमेयस्य मीमांसादिन्यायनिरपेक्षतयानवगम्यमानप्रमेयस्य, कार्यमनुष्ठेयमग्निष्टोमादि, तत्त्वं ब्रह्म 'सत्यं ज्ञानमनन्तं ब्रह्म' (तैत्ति. २।१।१) इत्यादि वेदान्तवेद्यं तदेवार्थः प्रतिपाद्यभागस्तं वेत्तीति कार्यतत्त्वार्थवित्। मेधातिथिस्तु कर्ममीमांसावासनया वेदस्य कार्यमेव तत्त्वरूपोऽर्थस्तं वेत्तीति कार्यतत्त्वार्थविदिति व्याचष्टे। तन्न। वेदान्तानां ब्रह्मण्यपि प्रामाण्याभ्युपगमान्न कार्यमेव तत्त्वरूपोऽर्थः। धर्माधर्मव्यवस्थापनसामर्थ्यात् प्रभो इति संबोधनम् ॥ ३ ॥

३. क्योंकि हे प्रकृष्ट सत्ता वाले [मनु], तू अकेला (एकमात्र) अचिन्त्य-अप्रमेय स्वयम्भू के इस सारे विधान का कार्यतत्त्वार्थवित् (कार्य, तत्त्व और अर्थ

---

२. धर्मः—यस्य विद्यमानतया तद्वस्तु तद्वस्तु स तद्वस्तुनो धर्मो यथा दाहो ज्वलनस्य। अनुवा० धर्मान्—Sacred laws—शिथिलोऽयमर्थः।

को जानने वाला अथवा कार्य और तत्त्व रूप अर्थ को जानने वाला अथवा कार्य के तत्त्व और अर्थ को जानने वाला) है।

स तैः पृष्टस्तथा सम्यगमितौजा महात्मभिः ।
प्रत्युवाचार्च्य तान्सर्वान्महर्षीञ्छ्रूयतामिति ॥ ४ ॥

स तैः पृष्टस्तथा सम्यगित्यादि ॥ स मनुस्तैर्महर्षिभिस्तथा तेन प्रकारेण पूर्वोक्तेन न्यायेन प्रणतिभक्तिश्रद्धातिशयादिना पृष्टस्तान्सम्यग्यथातत्त्वं प्रत्युवाच श्रूयतामित्युपक्रम्य । अमितमपरिच्छेद्यमोजः सामर्थ्यं ज्ञानशक्त्याभिधानादौ यस्य स तथा । अत एव सर्वज्ञसर्वशक्तितया महर्षीणामपि प्रश्नविषयः । महात्मभिर्महानुभावैः । अर्च्य पूजयित्वा । आङ्पूर्वस्याचतेर्ल्यबन्तस्य रूपमिदम् । धर्मस्याभिधानमपि पूजनपुरःसरमेव कर्तव्यमित्यनेन फलितम् । ननु मनुप्रणीतत्वेऽस्य शास्त्रस्य 'स पृष्टः प्रत्युवाच' इति न युक्तम्, 'अहं पृष्टो ब्रवीमि' इति युज्यते । अन्यप्रणीतत्वे च कथं मानवीसंहितेति ? उच्यते-शास्त्रकाराचार्याणामियं शैली यत्स्वाभिप्रायमपि परोपदेशमिव वर्णयन्ति; अत एव 'कर्मण्यपि जैमिनिः फलार्थत्वात्' (जै. न्या. सू. ३।१।४) इति जैमिनेरेव सूत्रम् । अत एव 'तदुपर्यपि बादरायणः सम्भवात्' (ब्र. सू. १।३।२६) इति बादरायणस्यैव

---

३. प्रकर्षेण भवतीति प्रभुः—प्र √भू-सत्तायाम् । विधानम्—विधीयन्तेऽनेन (कर्माणि) । यत्किञ्चिदस्माकं चिकीर्षितं, तत्केनचिन्नियमेन (विधानेन) एव कर्तुं पार्यते) कार्यम्—कर्तव्यम् । तत्त्वम्—तस्य भावस्तत्त्वम्—यथार्थस्वरूपम् । अर्थः—लक्ष्यम् (तुलना—दूरे अर्थं तरणिर्भ्राजमानः—ऋग्वेदः) अचिन्त्यम्—यस्य चिन्तनं न कर्तुं पार्यते । अप्रमेयम्—प्रत्यक्षानुमानादि प्रमाणैर्यो न ज्ञातुं पार्यते । 'अचिन्त्यस्याप्रमेयस्य' इति ('विधानस्य' इत्यस्य विशेषणे अथवा 'स्वयम्भुवः' इत्यस्य विशेषणे ।

रहस्यमयमिदं जगत् । 'किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः'—(गीता) । कर्मरहस्यज्ञाने मनुरेव प्रभुः । यदा कश्चित्पृच्छति तदैव रहस्योद्घाटनप्रभुर्भवति । संसारे किं कार्यं किं चात्र तत्त्वं कश्चास्माकमर्थः (लक्ष्यं)—सर्वमप्यचिन्त्यमप्रमेयम् । अस्यावबोधाय मनुमभिगच्छत मननं कुरुत ।

शारीरकसूत्रम् । अथवा मनूपदिष्टा धर्मास्तच्छिष्येण भृगुणा तदाज्ञयोपनिबद्धाः । अत एव वक्ष्यति (१।५९)—'एतद्वोऽयं भृगुः शास्त्रं श्रावयिष्यत्यशेषतः' इति । अतो भृगुरेव स पृष्टः प्रत्युवाचेति । मनूपदिष्टधर्माणां निबद्धत्वाच्च मानवीयसंहितेति व्यपदेशः ॥ ४ ॥

४. महान् स्वरूप वाले [ महर्षियों ] से उस प्रकार सम्यक् रूप से पूछे गए अमित ओज वाले उस [ मनु ] ने उन सब महर्षियों को अर्चित करके 'सुना जाए' इस प्रकार उत्तर दिया ।

श्रूयतामित्युपक्षिप्तमर्थमाह—

**आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् ।**
**अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः ॥ ५ ॥**

आसीदिदमिति ॥ ननु मुनीनां धर्मविषयप्रश्ने तदैवोत्तरं दातुमुचितं, तत्कोऽयमप्रस्तुतः प्रलयदशायां कारणलीनस्य जगतः सृष्टिप्रकरणावतारः ? अत्र मेधातिथिः समाधत्ते—शास्त्रस्य महाप्रयोजनत्वमनेन सर्वेण प्रतिपाद्यते । ब्रह्माद्याः स्थावरपर्यन्ताः संसारगतयो धर्माधर्मनिमित्ता इति वक्ष्यते—'तमसा बहुरूपेण वेष्टिताः कर्महेतुना' (१।४९) इति । वक्ष्यति च (१२।२३)—'एता दृष्ट्वास्य जीवस्य गतीः स्वेनैव चेतसा । धर्मतोऽधर्मतश्चैव धर्मे दध्यात्सदा मनः' इति । ततश्च निरतिशयैश्वर्यहेतुर्धर्मः, तद्विपरीतश्चाधर्मः, तद्व-

४. महान् आत्मा स्वरूपं यस्य स महात्मा । कुल्लूको बल्हरश्चोभावपि 'सम्यक्' इति 'प्रत्युवाच' इत्यस्य विशेषणं मन्यन्ते । वाक्यरचनया तस्य सम्बन्धः 'पृष्ट' इत्यनेन सह स्यात् । मनुसदृशा अमितौजसो जनास्तदैव प्रतिब्रुवन्ति यदा कश्चित् सम्यक् पृच्छति । जिज्ञासानवतां प्रश्नः 'सम्यक्' इति भवति । बल्हरस्य 'ओजस्' इत्यस्य Power इत्यर्थः शिथिलः, कुल्लूकस्यापि 'सामर्थ्यम्' इत्यर्थः शिथिलः । अयं शब्दोऽनेनैव शब्देनाभिधेयः । नान्यः पन्थाः । 'महात्मा' इत्यस्य the high minded इत्यर्थं ऋषीणां महत्त्वापकर्षकः— high souled इति स्यात् । वस्तुतः आत्मशब्दो मनुष्यस्य सर्वमपि व्यक्तित्वं वक्ति ।

दीनि च भूतान्यव्यक्तावस्थं प्रथमं सूक्ष्मरूपेण ततः स्थूलरूपेण प्रकाशयन्। वृत्तौजाः वृत्तमप्रतिहतमुच्यते। अत एव 'वृत्तिसर्गतायनेषु क्रमः' (पा. १।३।३८) इत्यत्र वृत्तिरप्रतिघात इति व्याख्यातं जयादित्येन। वृत्तमप्रतिहतमोजः सृष्टि-सामर्थ्यं यस्य स तथा। तमोनुदः प्रकृतिप्रेरकः। तदुक्तं भगवद्गीतायाम् (९।१०)—'मयाध्यक्षेण प्रकृतिः सूयते सचराचरम्' इति। प्रादुरासीत्प्रकाशितो बभूव। तमोनुदः प्रलयावस्थाध्वंसक इति तु मेधातिथि-गोविन्दराजौ ॥ ६ ॥

६. तब भगवान् अव्यक्त अप्रतिहत ओज वाला, तम को प्रणोदित करने वाला महाभूत आदि को अभिव्यक्त करने वाला स्वयम्भू प्रकट हुआ।

योऽसावतीन्द्रियग्राह्यः सूक्ष्मोऽव्यक्तः सनातनः।
सर्वभूतमयोऽचिन्त्यः स एव स्वयमुद्बभौ ॥ ७ ॥

योऽसाविति ॥ योऽसाविति सर्वनामद्वयेन सकललोकवेदपुराणेतिहासादि-प्रसिद्धं परमात्मानं निर्दिशति। अतीन्द्रियग्राह्यः इन्द्रियमतीत्य वर्तते इत्यतीन्द्रियं मनस्तद्ग्राह्य इत्यर्थः। यदाह व्यासः—'नैवासौ चक्षुषा ग्राह्यो न च शिष्टैरपीन्द्रियैः। मनसा तु प्रयत्नेन गृह्यते सूक्ष्मदर्शिभिः॥' सूक्ष्मो बहिरिन्द्रियागोचरः। अव्यक्तो व्यक्तिरवयवस्तद्रहितः। सनातनो नित्यः। सर्वभूतमयः सर्वभूतात्मा। अत एवाचिन्त्यः इयत्तया परिच्छेत्तुमशक्यः। स एव स्वयं उद्बभौ महदादिकार्यरूपतया प्रादुर्बभूव। उत्पूर्वो भातिः प्रादुर्भावे वर्तते। धातूनामनेकार्थत्वात् ॥ ७ ॥

७. जो वह अतीन्द्रिय से ग्राह्य, सूक्ष्म, अव्यक्त सनातन, सर्वभूतमय और अचिन्त्य [है] वह ही स्वयं महाज्योति से प्रकाशित हुआ।

---

१. तमोनुदः—अन्धकारस्यापसारयिता तमोगुणस्यापसारयिता वा।

२. 'अतीन्द्रियग्राह्य'—कुल्लूकमतीन्द्रियं मनस्तद् ग्राह्यः। नायमर्थः साधुस्तस्य मनसोऽप्यविषयत्वात्। मनसश्चापीन्द्रियत्वात्।

सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः ।
अप एव ससर्जादौ तासु बीजमवासृजत् ॥ ८ ॥

सोऽभिध्यायेति ॥ स परमात्मा नानाविधाः प्रजाः सिसृक्षुरभिध्याय 'आपो जायन्ताम्' इत्यभिध्यानमात्रेणाप एव ससर्ज । अभिध्यानपूर्विकां सृष्टिं वदतो मनोः प्रकृतिरेवाचेतनाऽस्वतन्त्रा परिणमत इत्ययं पक्षो न सम्मतः, किंतु ब्रह्मैवाव्याकृतशक्त्यात्मना जगत्कारणमिति त्रिदण्डिवेदान्तसिद्धान्त एवाभिमतः प्रतिभाति । तथा च छान्दोग्योपनिषत् (६।२।३)—'तदैक्षत बहु स्यां प्रजायेय' इति । अत एव शारीरकसूत्रकृता व्यासेन सिद्धान्तितम्—'ईक्षतेर्नाशब्दम्' (ब्र. सू. १।१।५) इति । ईक्षतेरीक्षणश्रवणात्र प्रधानं जगत्कारणम् । अशब्दं न विद्यते शब्दः श्रुतिर्यस्य तदशब्दमिति सूत्रार्थः । स्वाच्छरीरादव्याकृतरूपादव्याकृतमेव भगवद्भास्करीयवेदान्तदर्शने प्रकृतिः, तदेव तस्य च शरीरं, अव्याकृतशब्देन पञ्चभूतबुद्धीन्द्रियकर्मेन्द्रियप्राणमनःकर्माविद्यावासना एव सूक्ष्मरूपतया शक्त्यात्मना स्थिता अभिधीयन्ते । अव्याकृतस्य च ब्रह्मणा सह भेदाभेदस्वीकाराद्ब्रह्माद्वैतं, शक्त्यात्मना च ब्रह्म जगद्रूपतया परिणमत इत्युभयमप्युपपद्यते । आदौ स्वकार्यभूतब्रह्माण्डसृष्टेः प्राक् । अपां सृष्टिरत्रैव महदहंकारतन्मात्रक्रमेण बोद्धव्या । 'महाभूतादि व्यञ्जयन्' (१।६) इति पूर्वाभिधानादनन्तरमपि महदादिसृष्टेर्वक्ष्यमाणत्वात् । तास्वप्सु बीजं शक्तिरूपम् आरोपितवान् ॥ ८ ॥

८. अपने शरीर से विविध प्रजाओं को सृष्ट करने की इच्छा वाले उस (स्वयंभू) ने अभिध्यान करके प्रारम्भ में जलों को ही सृष्ट किया; उनमें बीज को अवसृष्ट किया ।

तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ।
तस्मिञ्जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः ॥ ९ ॥

---

८. स्वयंभुवो ध्यानमात्रेणापामुत्पत्तिर्मता । बीजमवासृजत्—कु०—बीजं शक्तिरूपमारोपितवान् । ब०—Placed his seed अत्र 'his' इति कस्यार्थः ? 'अवासृजत्' इत्यस्य 'आरोपितवान्' अयमर्थोऽपि विचार्यः ।

तदण्डमभवद्धैममिति ॥ तद्बीजं परमेश्वरेच्छया हैममण्डमभवत् । हैममिव हैमं शुद्धिगुणयोगात् न तु हैममेव । तदीयैकशकलेन भूमिनिर्माणस्य वक्ष्यमाणत्वात् । भूमेश्चाहैमत्वस्य प्रत्यक्षत्वादुपचाराश्रयणम् । सहस्रांशुरादित्यस्तत्तुल्यप्रभम् । तस्मिन्नण्डे हिरण्यगर्भो जातवान् । येन पूर्वजन्मनि हिरण्यगर्भोऽहमस्मीति भेदाभेदभावनया परमेश्वरोपासना कृता तदीयं लिङ्गशरीरावच्छिन्नजीवमनुप्रविश्य स्वयं परमात्मैव हिरण्यगर्भरूपतया प्रादुर्भूतः । सर्वलोकानां पितामहो जनकः । सर्वलोकपितामह इति वा तस्य नाम ॥ ९ ॥

९. वह (बीज) सूर्य के समान प्रभा वाला स्वर्णिम अण्डा बन गया। उस (अण्डे) में सर्वलोक-पितामह ब्रह्मा स्वयं उत्पन्न हुआ।

इदानीमागमप्रसिद्धनारायणशब्दार्थनिर्वचनेनोक्तमेवार्थं द्रढयति—

**आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।**
**ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः ॥ १० ॥**

आपो नारा इत्यादि ॥ आपो नाराशब्देनोच्यन्ते । अपां नाराशब्दस्याप्रसिद्धेस्तदर्थमाह—यतस्ता नराख्यस्य परमात्मनः सूनवोऽपत्यानि । 'तस्येदम्' (पा. ४।३।१२०) इत्यण्प्रत्ययः । यद्यपि अणि कृते ङीप्प्रत्ययः प्राप्तस्तथापि छान्दसलक्षणैरपि स्मृतिषु व्यवहारात् 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' (परि. ३६) इति पाक्षिको ङीप्प्रत्ययस्तस्याभावपक्षे सामान्यलक्षणप्राप्ते टापि कृते नारा इति रूपसिद्धिः । आपोऽस्य परमात्मनो ब्रह्मरूपेणावस्थितस्य पूर्वमयनमाश्रय इत्यसौ नारायण इत्यागमेष्वाम्नातः । गोविन्दराजेन तु 'आपो नराः' इति पठितं व्याख्यातं च—नारायण इति प्राप्ते 'अन्येषामपि दृश्यते' (पा. ६।३।१३७) इति दीर्घत्वेन नारायण इति रूपमिति । अन्ये तु—'आपो नाराः' इति पठन्ति ॥१०॥

१०. जल (आपः) 'नाराः' इस प्रकार कहे गए हैं (क्योंकि) जल निश्चित रूप से नर के पुत्र हैं—क्योंकि वे (जल) इसके (स्वयम्भू) के सर्वप्रथम

---

९. सहस्राण्यंशवो यस्य स सहस्रांशुः सूर्यः । अयं निहितार्थो यत्तस्मादण्डात् सहस्राण्यंशवो विकीर्यन्ते स्म ।

आश्रय है, इसलिए (वह स्वयंभू) नारायण स्मृत है (उसका नाम नारायण हुआ) ।

**यत्तत्कारणमव्यक्तं नित्यं सदसदात्मकम् ।**
**तद्विसृष्टः स पुरुषो लोके ब्रह्मेति कीर्त्यते ॥ ११ ॥**

यत्तत्कारणमव्यक्तमिति ॥ यत्तदिति सर्वनामभ्यां लोकवेदादिसर्वप्रसिद्धं परमात्मानं निर्दिशति । कारणं सर्वोत्पत्तिमताम् । अव्यक्तं बहिरिन्द्रियागोचरम् । नित्यं उत्पत्तिविनाशरहितम् । वेदान्तनिरूपितसत्स्वभावम् प्रत्यक्षाद्यगोचरत्वादसत्स्वभावमिव । अथवा सद्भावजातं असदभावस्तयोरात्मभूतम् । तथा च श्रुतिः (छान्दो. ६।८।७)—'ऐतदात्म्यमिदं सर्वम्' इति । तद्विसृष्टस्तेनोत्पादितः स पुरुषः सर्वत्र ब्रह्मेति कीर्त्यते ॥ ११ ॥

११. जो वह अव्यक्त नित्य सत्-असत्-स्वरूप कारण (है); उसके द्वारा विसृष्ट वह पुरुष लोक में ब्रह्मा इस प्रकार कीर्तित किया जाता है (प्रसिद्ध है)

**तस्मिन्नण्डे स भगवानुषित्वा परिवत्सरम् ।**
**स्वयमेवात्मनो ध्यानात्तदण्डमकरोद्द्विधा ॥ १२ ॥**

तस्मिन्नण्डे स भगवानित्यादि ॥ तस्मिन् पूर्वोक्तेऽण्डे स ब्रह्मा वक्ष्यमाणवर्षमानेन संवत्सरमुषित्वा स्थित्वा 'आत्मनैवाण्डं द्विधा भवतु' इत्यात्मगतध्यानमात्रेण तदण्डं द्विखण्डं कृतवान् ॥ १२ ॥

१२. उस अंडे में पूरा एक वर्ष निवास करके उस भगवान् ने स्वयमेव अपने ध्यान से उस अण्डे को द्विधा कर दिया (उसके दो टुकड़े कर दिए) ।

---

१०. आपो नरसूनवोऽतो नाराः । नरः—नेता । सर्वलोक नेतृत्वात्परमात्मा नरः ।

११. सदसदात्मकम्—cf. Real and unreal । 'असत्' इत्यस्यार्थोऽत्र unreal इति नास्ति । तस्य 'सत्ता' वर्ततेऽतः सत् । नाम्ना इन्द्रियग्राह्यो नाऽभवत् ।

१२. वत्सरम्—वर्षम् । 'परि' इत्युपसर्गेण पूर्णता द्योत्यते ।

ताभ्यां स शकलाभ्यां च दिवं भूमिं च निर्ममे ।
मध्ये व्योम दिशश्चाष्टावपां स्थानं च शाश्वतम् ॥ १३॥

ताभ्यां स शकलाभ्यां चेत्यादि ॥ शकलं खण्डं ताभ्यामण्डशकलाभ्यामुत्तरेण दिवं स्वर्लोकमधरेण भूलोकं उभयोर्मध्ये आकाशं दिशश्चान्तरालदिग्भिः सहाष्टौ समुद्राख्यं अपां स्थानं निर्मितवान् ॥१३ ॥

१३. उसने उन टुकड़ों से द्युलोक और पृथ्वीलोक को निर्मित किया; मध्य में आकाश को और आठ दिशाओं को तथा जलों के शाश्वत स्थान को (निर्मित किया) ।

इदानीं महदादिक्रमेणैव जगन्निर्माणमिति दर्शयितुं तत्सृष्टिमाह—

उद्बबर्हात्मनश्चैव मनः सदसदात्मकम् ।
मनसश्चाप्यहंकारमभिमन्तारमीश्वरम् ॥ १४ ॥

उद्बबर्हात्मनश्चैवेत्यादि ॥ ब्रह्मा आत्मनः परमात्मनः सकाशात्तेन रूपेण मन उद्धृतवान् । परमात्मन एव ब्रह्मस्वरूपेणोत्पन्नत्वात्परमात्मन एव च मनःसृष्टिर्वेदान्तदर्शने, न प्रधानात् । तथा च श्रुतिः (मुण्ड. २।१।३)—'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ॥' मनश्च श्रुतिसिद्धत्वाद्युगपज्ज्ञानानुत्पत्तिलिङ्गाच्च सत् अप्रत्यक्षत्वादसदिति मनसः पूर्वमहंकारतत्त्वं अहमित्यभिमानात्मककार्ययुक्तं ईश्वरं स्वकार्यकरणक्षमम् ॥ १४ ॥

१४. और अपने (आत्मा) से ही उसने (ब्रह्मा) ने सदसत्स्वरूप मन को उद्धृत किया (निकाला) और मन से अभिमन्ता ईश्वर अहंकार को (उद्धृत किया) ।

---

१३. अष्टौ दिशः—चतस्रो दिशः—प्राची, दक्षिणा, प्रतीची, उदीची, चतस्रश्चोपदिशः—आग्नेयी, नैर्ऋती, वायवी, ऐशानी । केषांचिन्मतेन दिशोदश—नवमी 'तिर्यक्' (अधो वा), दशमी 'ऊर्ध्वम्' ।

१४. अभिमन्ता—कु० अहमित्यभिमानात्मककार्ययुक्तः ; च० which possesses the function of self-consciousness । योऽभिमन्यते

महान्तमेव चात्मानं सर्वाणि त्रिगुणानि च ।
विषयाणां ग्रहीतॄणि शनैः पञ्चेन्द्रियाणि च ॥ १५ ॥

महान्तमेव चात्मानमित्यादि ॥ महान्तमिति महदाख्यतत्त्वमहंकारात्पूर्वं परमात्मन एवाव्याकृतशक्तिरूपप्रकृतिसहितादुद्धृतवान् । आत्मन उपकारकत्वात् आत्मानमात्मोपकारकत्वाद्वा यान्यभिहितानि अभिधास्यन्ते च तान्युत्पत्तिमन्ति सर्वाणि सत्त्वरजस्तमोगुणयुक्तानि विषयाणां शब्दस्पर्शरूपरसगन्धानां ग्राहकाणि शनैः क्रमेण वेदान्तसिद्धेन श्रोत्रादीनि द्वितीयाध्यायवक्तव्यानि पञ्च बुद्धीन्द्रियाणि, चशब्दात् पञ्च पाय्वादीनि कर्मेन्द्रियाणि, शब्दतन्मात्रादीनि च पञ्चोत्पादितवान् । नन्वभिध्यानपूर्वकसृष्ट्यभिधानाद्वेदान्तसिद्धान्त एव मनोरभिमत इति प्रागुक्तं तत्र संगच्छते । इदानीं महदादिक्रमेण सृष्ट्यभिधानाद्वेदान्तदर्शनेन च परमात्मन एवाकाशादिक्रमेण सृष्टिरुक्ता । तथा च तैत्तिरीयोपनिषत् (२।१।१)—'तस्माद्वा एतस्मादात्मन आकाशः संभूतः । आकाशाद्वायुः । । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी' इति । उच्यते—प्रकृतितो महदादिक्रमेण सृष्टिरिति भगवद्भास्करीयदर्शनेऽप्युपपद्यत इति तद्विदो व्याचक्षते । अव्याकृतमेव प्रकृतिरिष्यते, तस्य च सृष्ट्युन्मुखत्वं सृष्ट्याद्यकालयोगित्वं तदेव महत्तत्त्वं, ततो 'बहु स्याम्' इत्यभिमानात्मकेक्षणकालयोगित्वमव्याकृतस्याहंकारतत्त्वम् । तत आकाशादिपञ्चभूतसूक्ष्माणि क्रमेणोत्पन्नानि पञ्च तन्मात्राणि, ततस्तेभ्य एव स्थूलान्युत्पन्नानि पञ्चमहाभूतानि सूक्ष्मस्थूलक्रमेणैव कार्योदयदर्शनादिति न विरोधः । अव्याकृतगुणत्वेऽपि सत्त्वरजस्तमसां सर्वाणि त्रिगुणानीत्युपपद्यते । भवतु वा सत्त्वरजस्तमः समतावस्थैव मूलप्रकृतिः, भवन्तु च तत्त्वान्तराण्येव महदहंकारतन्मात्राणि, तथापि प्रकृतिर्ब्रह्मणोऽनन्यैवेति मनोः स्वरसः । यतो वक्ष्यति (१२।९१)—'सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि' इति । तथा (१२।१२५)—'एवं यः सर्वभूतेषु

---

सोऽभिमन्ता । 'अहम्' इति भावनयैव जनोऽभिमन्यते आत्मविश्वासं विचारयति, ततश्च 'ईश्वरो भवति' 'स्वकार्यकरणक्षमो भवति । अहंकारे न दोषो यदि स तमोगुणावृतो न स्यात् । अहङ्कारेणात्मविश्वासस्तेन च स्वकार्यक्षमता जने जायते ।

प्रपश्यत्यात्मानमात्मना। स सर्वसमतामेत्य ब्रह्माभ्येति परं पदम्' इति ॥ १५ ॥

१५. और महान् आत्मा को, और सब त्रिगुण वस्तुओं को तथा क्रम से विषयों को ग्रहण करने वाली पांच इन्द्रियों (ज्ञानेन्द्रियों) को उद्धृत किया।

**तेषां त्ववयवान्सूक्ष्मान्षण्णामप्यमितौजसाम् ।**
**सन्निवेश्यात्ममात्रासु सर्वभूतानि निर्ममे ॥ १६ ॥**

तेषां त्ववयवान्सूक्ष्मानित्यादि ॥ तेषां षण्णां पूर्वोक्ताहंकारस्य तन्मात्राणां च ये सूक्ष्मा अवयवास्तान् आत्ममात्रासु षण्णां स्वविकारेषु योजयित्वा मनुष्यतिर्यक्स्थावरादीनि सर्वभूतानि परमात्मा निर्मितवान्। तत्र तन्मात्राणां विकाराः पञ्चमहाभूतानि अहंकारस्येन्द्रियाणि पृथिव्यादिभूतेषु शरीररूपतया परिणतेषु तन्मात्राहंकारयोजनां कृत्वा सकलस्य कार्यजातस्य निर्माणम्। अत एवामितौजसामनन्तकार्यनिर्माणेनातिवीर्यशालिनाम् ॥ १६ ॥

१६. अमित ओज वाले उन छः के सूक्ष्म अवयवों को आत्ममात्राओं में सन्निविष्ट करके सब भूतों को निर्मित किया।

**यन्मूर्त्यवयवाः सूक्ष्मास्तस्येमान्याश्रयन्ति षट् ।**
**तस्माच्छरीरमित्याहुस्तस्य मूर्तिं मनीषिणः ॥ १७ ॥**

यन्मूर्त्यवयवाः सूक्ष्मा इत्यादि ॥ यस्मान्मूर्तिः शरीरं तत्संपादका अवयवाः सूक्ष्मास्तन्मात्राहंकाररूपाः षट् तस्य ब्रह्मणः सप्रकृतिकस्य इमानि वक्ष्यमाणानि भूतानीन्द्रियाणि च पूर्वोक्तानि कार्यत्वेनाश्रयन्ति, तन्मात्रेभ्यो भूतोत्पत्तेः अहंकाराच्च इन्द्रियोत्पत्तेः। तथा च पठन्ति (सा. का. २२)—'प्रकृते-

---

१५. महान्तमेव चात्मानम्—अत्र कुल्लूक-व्याख्या न तोषदा। बूलहरो लिखति the great one, the soul। वाक्यरचनया 'महान्तमेव चात्मानम्'—इत्यत्र 'महान्तम्' इति 'आत्मानम्' इत्यस्य विशेषणम्। सर्वाणि त्रिगुणानि त्रिगुणमयानि सर्वाणि वस्तूनि।

१६. आत्ममात्रासु संनिवेश्य—बू० joining with particles of himself। अयं निहितार्थः—सर्वाऽपि सृष्टिर्दिव्यातिदिव्यभगवतो दिव्यत्वगुण-विशिष्टा।

महांस्ततोऽहङ्कारस्तस्माद्गणश्च षोडशकः। तस्मादपि षोडशकात्पञ्चभ्यः पञ्च भूतानि॥' तस्मात्तस्य ब्रह्मणो वा मूर्तिं स्वभावस्तां तथा परिणतामिन्द्रियादि-आश्रितो लोकाः शरीरमिति वदन्ति। षडाश्रयणाच्छरीरमिति शरीरनिर्वचनेना-नेन पूर्वोक्तोऽतिक्रम एव दूरीकृतः॥ १७॥

१७. क्योंकि उसकी मूर्ति के छः सूक्ष्म अवयवों का वे (प्राणी) आश्रय लेते हैं, इसलिए मनीषी जन उसकी (प्राणिमात्र की) मूर्ति को 'शरीर' इस प्रकार कहते हैं।

**तदाविशन्ति भूतानि महान्ति सह कर्मभिः।**
**मनश्चावयवैः सूक्ष्मैः सर्वभूतकृदव्ययम्॥ १८॥**

तदाविशन्ति भूतानीत्यादि॥ पूर्वश्लोके तस्येति प्रकृतं ब्रह्मात्र तदिति परा-मृश्यते। तद्ब्रह्म शब्दादिपञ्चतन्मात्रात्मनाऽवस्थितं महाभूतान्याकाशादीनि आविशन्ति तेभ्य उत्पद्यन्ते। सह कर्मभिः स्वकार्यैः; तथाकाशस्यावकाशदानं कर्म, वायोर्व्यूहनं विन्यासरूपं, तेजसः पाकोऽपां संग्रहणं, पिण्डीकरणञ्च पृथिव्या धारणम्। अहंकारात्मनावस्थितं ब्रह्म मन आविशति। अहंकारादु-त्पद्यत इत्यर्थः। अवयवैः स्वकार्यैः शुभाशुभसंकल्पसुखदुःखादिरूपैः सूक्ष्मै-र्बहिरिन्द्रियागोचरैः सर्वभूतकृत्सर्वोत्पत्तिनिमित्तं मनोजन्यशुभाशुभकर्मप्रभ-वत्वाज्जगतः। अव्ययमविनाशि॥ १८॥

१८. सब महाभूत, सब भूतों को बनाने वाले उस अव्यय में कर्मों के साथ प्रविष्ट होते हैं और मन सूक्ष्म अवयवों के साथ (प्रविष्ट होता है)

---

१७. 'षड् आश्रयति' इति शरीरम्। इयं नैरुक्तानां निर्वचनप्रणाली।

१८. मनुष्यशरीरं कर्मार्थमेव निर्मितम्—कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः। एवं त्वयि नान्यथेतोऽस्ति—ईशोपनिषद्—२। यदि शरीरं कर्मरतं तिष्ठति, मनश्च विज्ञानेन स्वसूक्ष्मावयवविकासं विदधाति तदा ब्रह्मसायुज्यं जायते। निरुक्तकारस्तु मनुष्यं सर्वथा कर्मण एव निर्मितं मन्यते। दृश्यन्तां मनुष्य-पर्यायवाचिनां शब्दानां निर्वचनानि—मनुष्या मननात्; मत्वा कर्माणि सीव्यन्ति। नरा नृत्यन्ति कर्मसु। कृष्टयः कर्मवन्तो भवन्ति।

तेषामिदं तु सप्तानां पुरुषाणां महौजसाम् ।
सूक्ष्माभ्यो मूर्तिमात्राभ्यः संभवत्यव्ययाद्व्ययम् ॥ १९ ॥

तेषामिदं तु सप्तानामित्यादि ॥ तेषां पूर्वप्रकृतानां महदहंकारतन्मात्राणां सप्तसंख्यानां पुरुषाणामात्मन उत्पन्नत्वाल्लब्धशक्तिबाहुल्याच्च पुरुषाणां महौजसां स्वकार्यसंपादनेन वीर्यवतां सूक्ष्मा या मूर्तिमात्राः शरीरसंपादकभागास्तेभ्य इदं जगन्नश्वरं संभवति, अनश्वरात्कारणात्तद्विनाशि स्वकारणे लीयते। कारणं तु कार्यापेक्षया स्थिरम्। परमकारणं तु ब्रह्म नित्यमुपासनीयमिति प्रदर्शयितुमयमनुवादः ॥ १९ ॥

१९. उन सात महान् ओजवाले पुरुषों की सूक्ष्म मूर्तिमात्राओं से यह नश्वर (जगत्) अनश्वर से उत्पन्न होता है।

आद्याद्यस्य गुणं त्वेषामवाप्नोति परः परः ।
यो यो यावतिथश्चैषां स स तावद्गुणः स्मृतः ॥ २० ॥

आद्याद्यस्य गुणं त्वेषामित्यादि ॥ एषामिति पूर्वतरश्लोके (१।१८) 'तदाविशन्ति भूतानि' इत्यत्र भूतानां परामर्शः। तेषां चाकाशादिक्रमेणोत्पत्तिक्रमः, शब्दादिगुणवत्ता च वक्ष्यते। तत्राद्याद्यस्याकाशादेर्गुणं शब्दादिकं वाय्वादिः परः परः प्राप्नोति। एतदेव स्पष्टयति—यो य इति। एषां मध्ये यो यो यावतां पूरणो यावतिथः 'वतोरिथुक्' (पा. ५।२।५३), स स द्वितीयादिः द्वितीयो द्विगुणः तृतीयस्त्रिगुण इत्येवमादिर्मन्वादिभिः स्मृतः। एतेनैतदुक्तं भवति—आकाशस्य शब्दो गुणः, वायोः शब्दस्पर्शौ, तेजसः शब्दस्पर्शरूपाणि, अपां शब्दस्पर्शरूपरसाः, भूमेः शब्दस्पर्शरूपरसगन्धाः। अत्र यद्यपि 'नित्यवीप्सयोः' (पा. ८।१।४) इति द्विर्वचनेनाद्यस्याद्यस्येति प्राप्तं तथापि स्मृतीनां छन्दःसमानविषयत्वात् 'सुपां सुलुक्' (पा. ७।१।३९) इति प्रथमाद्यस्य सुब्लुक् तेनाद्याद्यस्येति रूपसिद्धिः ॥ २० ॥

---

१९. एभिः सप्तभिरेव पुरुषस्य रचना—अत इमे पुरुषा इति भणिताः। बल्लूरः 'तु' इत्यस्य इत्यर्थं करोति; 'तु' अत्र निरर्थकम्।

२०. इनमें परवर्ती परवर्ती पहले पहले के गुण को प्राप्त कर लेता है। और इनमें जो जो क्रम में जिस स्थान पर है वह-वह उतने गुणों वाला स्मृत है।

**सर्वेषां तु स नामानि कर्माणि च पृथक्पृथक्।**
**वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे ॥ २१ ॥**

सर्वेषां तु स नामानीत्यादि ॥ स परमात्मा हिरण्यगर्भरूपेणावस्थितः सर्वेषां नामानि गोजातेर्गौरिति, अश्वजातेरश्व इति; कर्माणि ब्राह्मणस्याध्ययनादीनि, क्षत्रियस्य प्रजारक्षणादीनि पृथक् पृथक् यस्य पूर्वकल्पे यान्यभूवन् आदौ सृष्ट्यादौ वेदशब्देभ्य एवावगम्य निर्मितवान्। भगवता व्यासेनापि वेदमीमांसायां वेदपूर्विकैव जगत्सृष्टिर्व्युत्पादिता। तथा च शारीरकसूत्रम् (ब्र. सू. १।३।२८)—'शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम्'। अस्यार्थः— देवतानां विग्रहवत्त्वे वैदिके वस्वादिशब्दे देवतावाचिनि विरोधः स्यादिदमा-दिमत्त्वप्रसङ्गादिति चेन्नास्ति विरोधः। कस्मात्? अतः शब्दादेव, जगतः प्रभवात्। प्रलयकालेऽपि सूक्ष्मरूपेण परमात्मनि वेदराशिः स्थितः। स इह कल्पादौ हिरण्यगर्भस्य परमात्मन एव प्रथमदेहिमूर्तेर्मनस्यवस्थान्तरमनापन्नः सुप्तप्रबुद्धवत् प्रादुर्भवति। तेन प्रयोगस्थानीयेन सुरनरतिर्यगादिप्रविभक्तं जगदभिधेयभूतं निर्मिमीते। कथमिदं गम्यते? प्रत्यक्षानुमानाभ्याम्, श्रुतिस्मृतिभ्यामित्यर्थः। प्रत्यक्षं श्रुतिरनपेक्षत्वात्। अनुमानं स्मृतिस्तस्याः सापेक्षत्वात्। तथा च श्रुतिः—'एत इति वै प्रजापतिर्देवानसृजतासृग्रमिति मनुष्यानिन्दव इति पितॄंस्तिरःपवित्रमिति ग्रहानाशव इति स्तोत्रं विश्वानीति शस्त्रमभि सौभगेत्यन्याः प्रजाः'। स्मृतिस्तु (१।२१)—'सर्वेषां तु स नामानि' इत्यादिका मन्वादिप्रणीतैव। पृथक्संस्थाश्चेति। लौकिकीश्च व्यवस्थाः कुलालस्य घटनिर्माणं, कुविन्दस्य पटनिर्माणमित्यादिविभागेन निर्मित-वान् ॥ २१ ॥

२१. उसने प्रारम्भ में वेद के शब्दों से ही सबके नामों को और पृथक्-पृथक् कर्मों को तथा पृथक्-पृथक् व्यवस्थाओं को निर्मित किया।

---

२०. यावतिथः—यावत्—डुक्।

२१. प्रलयानन्तरं सृष्टिः पूर्वसृष्टिरिव प्रवर्तते—'यथापूर्वमकल्पयद्' इति

कालं कालविभक्तीश्च नक्षत्राणि ग्रहांस्तथा ।
सरितः सागराञ्छैलान्समानि विषमाणि च ॥ २४ ॥

कालं कालविभक्तीश्चेत्यादि ॥ अत्र ससर्जेत्युत्तरश्लोकस्थितेन क्रिया संबध्यते । आदित्यादिक्रियाप्रचयरूपं कालं, कालविभक्तीर्मासर्त्वयनादीः, नक्षत्राणि कृत्तिकादीनि, ग्रहान्सूर्यादीन्, सरितो नदीः, सागरान्समुद्रान्, शैलान्पर्वतान्, समानि समस्थानानि, विषमाणि उच्चनीचरूपाणि ॥ २४ ॥

तपो वाचं रतिं चैव कामं च क्रोधमेव च ।
सृष्टिं ससर्ज चैवेमां स्रष्टुमिच्छन्निमाः प्रजाः ॥ २५ ॥

तपो वाचमित्यादि ॥ तपः प्राजापत्यादि वाचं वाणीं रतिं चेतःपरितोषं काममिच्छां क्रोधं चेतोविकारं इमां एतच्छ्लोकोक्तां पूर्वश्लोकोक्तां च सृष्टिं चकार । सृज्यत इति सृष्टिः । कर्मणि क्तिन् । इमाः प्रजा वक्ष्यमाणा देवादिकाः स्रष्टुमिच्छन् ॥ २५ ॥

२४-२५. काल को, काल के विभागों को, नक्षत्रों को तथा ग्रहों को, नदियों को, सागरों को, पर्वतों को, समों और विषमों को, तप को, वाणी को, रति और काम को और क्रोध को और इस सृष्टि को इन प्रजाओं को सृष्ट करने की इच्छा वाले (उसने) सृष्ट किया ।

कर्मणां च विवेकार्थं धर्माधर्मौ व्यवेचयत् ।
द्वन्द्वैरयोजयच्चेमाः सुखदुःखादिभिः प्रजाः ॥ २६ ॥

कर्मणां चेति ॥ धर्मो यज्ञादिः, स च कर्तव्यः; अधर्मो ब्रह्मवधादिः, स न कर्तव्यः, इति कर्मणां विभागाय धर्माधर्मौ व्यवेचयत् पृथक्त्वेनाभ्यधात् । धर्मस्य फलं सुखं, अधर्मस्य फलं दुःखम् । धर्माधर्मफलभूतैर्द्वन्द्वैः परस्परविरुद्धैः सुखदुःखादिभिरिमाः प्रजा योजितवान् । आदिग्रहणात् कामक्रोधरागद्वेषक्षुत्पिपासाशोकमोहादिभिः ॥ २६ ॥

---

२५. रती कामे च रतेर्मुख्यता, अतस्तस्याः पूर्वं वचनम्—अभिज्ञान शाकुन्तले कालिदासः—

'अकृतार्थेऽपि मनसिजे रतिमुभयप्रार्थना कुरुते'

२६. और कर्मों के विवेक के लिए धर्म और अधर्म की विवेचना की (पृथक्-पृथक् रूप से ठीक-ठीक कहा) तथा इन प्राणियों को सुख-दुःखादि द्वन्द्वों से युक्त किया।

**अण्व्यो मात्रा विनाशिन्यो दशार्धानां तु याः स्मृताः ।**
**ताभिः सार्धमिदं सर्वं संभवत्यनुपूर्वशः ॥ २७ ॥**

अण्व्यो मात्रा इति ॥ दशार्धानां पञ्चानां महाभूतानां याः सूक्ष्माः पञ्चतन्मात्राख्या विनाशिन्यः पञ्चमहाभूतरूपेण विपरिणामिन्यः ताभिः सह उक्तं वक्ष्यमाणं चेदं सर्वमुत्पद्यते । अनुपूर्वशः क्रमेण । सूक्ष्मात्स्थूलं स्थूलात्स्थूलतरमित्यनेन सर्वकर्तृब्रह्मणो मानससृष्टिः कदाचित्तत्त्वनिरपेक्षा स्यादितीमां शङ्कानिरासार्थं तत्त्वद्वारेणैवं सृष्टिरिति सर्गे पुनः पूर्वोक्तं स्मारितवान् ॥२७॥

२७. इन के आधे (पाँच) [महाभूतों] की जो सूक्ष्म विनाशिनी मात्राएं कही गई हैं, उनके साथ यह सब क्रम से उत्पन्न होता है।

**यं तु कर्मणि यस्मिन्स न्ययुङ्क्त प्रथमं प्रभुः ।**
**स तदेव स्वयं भेजे सृज्यमानः पुनः पुनः ॥ २८ ॥**

यं तु कर्मणीति ॥ स प्रजापतिर्यं जातिविशेषं व्याघ्रादिकं यस्यां क्रियायां हिंस्रत्वादिकायां सृष्ट्यादौ नियुक्तवान् स जातिविशेषः पुनःपुनरपि सृज्यमानः स्वकर्मवशेन तदेवाचरितवान् । एतेन प्राणिकर्मसापेक्षं प्रजापतेरुत्तमाधमजातिनिर्माणं न रागद्वेषाभ्यामिति दर्शितम् । अत एव वक्ष्यति (१।४१) 'यथाकर्म तपोयोगात्सृष्टं स्थावरजङ्गमम्' इति ॥ २८ ॥

२८. प्रभु ने प्रारम्भ में जिसको जिस कर्म में नियुक्त कर दिया, बार-बार पैदा किए जाते हुए उसने स्वयं उसको ही स्वीकार कर लिया।

---

२६. एतस्यैव भगवतो लीला प्रचलति । प्रजा द्वन्द्वैर्योजयति धर्माधर्मविवेचनानि करोति ।

२७. 'तु' अत्र निरर्थकं बलहर but इत्यर्थं करोति ।

'तु' निरर्थकम्, ब० 'but' इत्यर्थं करोति ।

एतदेव प्रपञ्चयति—

**हिंस्राहिंस्रे मृदुक्रूरे धर्माधर्मावृतानृते ।**
**यद्यस्य सोऽदधात्सर्गे तत्तस्य स्वयमाविशत् ॥ २९ ॥**

हिंस्राहिंस्रे इत्यादि ॥ हिंस्रं कर्म सिंहादेः करिमारणादिकम् । अहिंस्रं हरिणादेः । मृदु दयाप्रधानं विप्रादेः । क्रूरं क्षत्रियादेः । धर्मो यथा ब्रह्मचार्यादेः गुरुशुश्रूषादिः । अधर्मो यथा तस्यैव मांसमैथुनसेवनादिः । ऋतं सत्यं, तच्च प्रायेण देवानाम् । अनृतमसत्यं, तदपि प्रायेण मनुष्याणाम् । तथा च श्रुतिः—'सत्यवाचो देवा अनृतवाचो मनुष्याः' इति । तेषां मध्ये यत्कर्म स प्रजापतिः सर्गादौ यस्याधारयत् सृष्ट्युत्तरकालमपि स तदेव कर्म प्राक्तनादृष्टवशात्स्वयमेव भेजे ॥ २९ ॥

२९. हिंस्र और अहिंस्र, मृदु और क्रूर, धर्म और अधर्म ऋत और अनृत—उसने सृष्टि में जो जिसके लिए धारण किया (निश्चित किया) वह उसमें स्वयं प्रविष्ट हो गया ।

अथ दृष्टान्तमाह—

**यथर्तुलिङ्गान्यृतवः स्वयमेवर्तुपर्यये ।**
**स्वानि स्वान्यभिपद्यन्ते तथा कर्माणि देहिनः ॥ ३० ॥**

यथर्त्विति ॥ यथा वसन्तादिऋतवः ऋतुचिह्नानि चूतमञ्जर्यादीनि ऋतुपर्यये स्वकार्यावसरे स्वयमेवाप्नुवन्ति, तथा देहिनोऽपि हिंस्रादीनि कर्माणि ॥ ३० ॥

३०. जैसे ऋतु परिवर्तन में ऋतुएं अपने-अपने ऋतुचिह्नों को प्राप्त कर लेती हैं वैसे ही देहधारी कर्मों को [प्राप्त कर लेते हैं] ।

---

२९. पूर्वजन्मकर्मानुसारं स तस्मै तस्मै तत् तद् ददाति ।

पूर्वजन्मकर्मभिः स्वभावोत्पत्तिः । स्वभावेन तत्तत्कर्मधारणम्—इदं कर्मधारणं स्वयमेव क्रियते—

न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः ।
न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते ॥ —गीता

**लोकानां तु विवृद्ध्यर्थं मुखबाहूरुपादतः ।**
**ब्राह्मणं क्षत्रियं वैश्यं शूद्रं च निरवर्तयत् ॥ ३१ ॥**

लोकानामिति ॥ भूरादीनां लोकानां बाहुल्यार्थं मुखबाहूरुपादेभ्यो ब्राह्मण-क्षत्रियवैश्यशूद्रान्यथाक्रमं निर्मितवान् । ब्राह्मणादिभिः सायंप्रातरग्ना-वाहुतिः प्रक्षिप्ता सूर्यमुपतिष्ठते सूर्याद्वृष्टिर्वृष्टेरन्नमन्नात्प्रजाबाहुल्यम् । वक्ष्यति च—'अग्नौ प्रास्ताहुतिः सम्यगादित्यम्—' (३।७६) इत्यादि । दैव्या च शक्त्या मुखादिभ्यो ब्राह्मणादिनिर्माणम् । ब्राह्मणो च विशङ्कनीयः श्रुतिसिद्धत्वात् । तथा च श्रुतिः 'ब्राह्मणोऽस्य मुखमासीत्' । (ऋ. सं. ८।४।१९) इत्यादिः ॥ ३१ ॥

३१. लोकों की सम्यक् वृद्धि के लिए मुख, बाहु, जङ्घा और पांव से [यथाक्रम] ब्राह्मण, क्षत्रिय, वैश्य और शूद्र को निर्मित किया ।

**द्विधा कृत्वात्मनो देहमर्धेन पुरुषोऽभवत् ।**
**अर्धेन नारी तस्यां स विराजमसृजत्प्रभुः ॥ ३२ ॥**

द्विधा कृत्वेति ॥ स ब्रह्मा निजदेहं द्विखण्डं कृत्वा अर्धेन स्त्री तस्यां मैथुनधर्मेण विराट्संज्ञं पुरुषं निर्मितवान् । श्रुतिश्च (ऋ. सं. ८।४।१७)—'ततो विराडजायत' इति ॥ ३२ ॥

३२. प्रभु अपने देह को द्विधा करके आधे से पुरुष हो गया; आधे से नारी (हो गया) उस (नारी) में विराट् को उत्पन्न किया ।

---

यदि चातुर्वर्ण्यं न स्यात् तदा लोकवृद्धिस्तु काम भवेत् विवृद्धिः (सम्यग्वृद्धिः, व्यवस्थितवृद्धिः) न भविष्यति ।

'तु' इति निरर्थकः, बल्हरः 'but' इत्यर्थं करोति ।

३२. सौन्दर्यशक्ती महोज्ज्वलशक्ती वा यः स एव पुरुषः—स एव नरो नेता । तेन नरेण (नेत्रा) सह या गुणाकृष्टा भक्तिमती सती योगमवाप्नोति सा नारी । यदोभावपि यथार्थनामानौ स्यातां तदा विराड्वत्सस्य प्रसूतिः । अथार्धनारी, श्वरे शिवेऽपि मतिनिधान कर्तव्यम्।

दिविनाशकं तडित्। मेघाः प्रसिद्धाः। रोहितं दण्डाकारम्। नानावर्णं दिवि दृश्यते यज्ज्योतिस्तदेव वक्रमिन्द्रधनुः। उल्का रेखाकारमन्तरिक्षात्पतज्ज्योतिः। निर्घातो भूम्यन्तरिक्षगत उत्पातध्वनिः। केतवः शिखावन्ति ज्योतींषि उत्पातरूपाणि। अन्यानि ज्योतींषि ध्रुवागस्त्यादीनि नानाप्रकाराणि ॥ ३८ ॥

३८. विद्युतों, अशनियों, मेघों, रोहितों, इन्द्रधनुषों, उल्काओं, निर्घातों, केतुओं तथा विविध ज्योतियों को [सृष्ट किया]।

**किन्नरान्वानरान्मत्स्यान्विविधांश्च विहङ्गमान्।**
**पशून्मृगान्मनुष्यांश्च व्यालांश्चोभयतोदतः ॥ ३९ ॥**

किन्नरानिति ॥ किन्नरा अश्वमुखा देवयोनयो नरविग्रहाः। वानराः प्रसिद्धाः। मत्स्या रोहितादयः। विहङ्गमाः पक्षिणः। पशवो गवाद्याः। मृगा हरिणाद्याः। व्यालाः सिंहाद्याः। उभयतोदतः द्वे दन्तपङ्क्ती येषां उत्तराधरे भवतः ॥३९॥

३९. किन्नरों, वानरों, मत्स्यों, विविध पक्षियों, पशुओं और मनुष्यों तथा दो दन्तपङ्क्तियों वाले हिंस्रपशुओं को [सृष्ट किया]।

**कृमिकीटपतङ्गांश्च यूकामक्षिकमत्कुणम्।**
**सर्वं च दंशमशकं स्थावरं च पृथग्विधम् ॥ ४० ॥**

कृमिकीटेति ॥ कीटाः कृमिभ्यः किञ्चित्स्थूलाः। पतङ्गाः शलभाः। यूकादयः प्रसिद्धाः। 'क्षुद्रजन्तवः' (पा. २।४।८) इत्यनेन एकवद्भावः। स्थावरं वृक्षलतादिभेदेन विविधप्रकारम् ॥ ४० ॥

४०. कृमियों, कीटों, पतङ्गों, यूकाओं (जुंओं), मक्खियों, खटमलों, तथा सब डांसों (दंशों) और मच्छरों तथा पृथग्विध स्थावर [सृष्टि] को [सृष्ट किया]

**एवमेतैरिदं सर्वं मन्नियोगान्महात्मभिः।**
**यथाकर्म तपोयोगात्सृष्टं स्थावरजङ्गमम् ॥ ४१ ॥**

एवमेतैरिति ॥ एवमित्युक्तप्रकारेण एतैर्मरीच्यादिभिरिदं सर्वं स्थावरजङ्गमं सृष्टम्। यथाकर्म यस्य जन्तोर्यादृशं कर्म तदनुरूपम्। तस्य देवमनुष्यतिर्य-

---

३९. ऋग्वेदस्य पुरुषसूक्ते—ये के चोभयादतः (१०.९०.१०)

नादिवैनियुक्तार्थं मन्नियोगान्महात्मना । कर्मयोगान्महत्तपः कृत्वा । सर्वं-मेतच्च तपोयोगाभिरिति दर्शितम् ॥४१॥

४१. इस प्रकार मेरी आज्ञा से इन महात्माओं के द्वारा यह सब अचराचर [विश्व] कर्म के अनुसार तप के योग से [सृष्ट किया गया]।

**येषां तु यादृशं कर्म भूतानामिह कीर्तितम् ।**
**तत्तथा वोऽभिधास्यामि क्रमयोगं च जन्मनि ॥ ४२ ॥**

येषामित्यादि ॥ येषां पुनर्यादृशं कर्म इह संसारे पूर्वाचार्यैः कीर्तितम् यथा—'ओषध्यः फलपाकान्ता बहुपुष्पफलोपगाः' (१।४६)। ब्राह्मणादीनां चाध्ययनादिकर्म तत्तथैव वो युष्माकं वक्ष्यामि । जन्मादिक्रमयोगं च ॥ ४२ ॥

४२. यहाँ जिन प्राणियों का जैसा कर्म कहा गया [है] उस प्रकार उसे और जन्म में क्रम-व्यवस्था को तुम्हें कहूँगा।

**पशवश्च मृगाश्चैव व्यालाश्चोभयतोदतः ।**
**रक्षांसि च पिशाचाश्च मनुष्याश्च जरायुजाः ॥ ४३ ॥**

पशवश्चेति ॥ जरायुर्गर्भावरणचर्म, तत्र मनुष्यादयः प्रादुर्भवन्ति पश्चान्मुक्ता जायन्ते । एषामेव जन्मक्रमः प्रागुक्तो विवृतः । दन्तपङ्क्तिसमानार्थो दच्छब्दः प्रकृत्यन्तरमस्ति, तस्येदं प्रथमाबहुवचने रूपमुभयतोदत इति ॥ ४३ ॥

४३. (गौ भैंस आदि) पशु, (अश्व) पशु, दो दन्त-पङ्क्ति वाले हिंस्र पशु, राक्षस, पिशाच और मनुष्य (ये) जरायुज (गर्भावरण चर्म से उत्पन्न होने वाले) हैं।

**अण्डजाः पक्षिणः सर्पा नक्रा मत्स्याश्च कच्छपाः ।**
**यानि चैवंप्रकाराणि स्थलजान्यौदकानि च ॥ ४४ ॥**

---

४२. 'तु' निरर्थकं, कल्लूकः ....

पशवः—धेनुमहिषीप्रभृतयः । मृगाः—कुक्कुराश्वप्रभृतयः । व्यालाः—सिंहव्याघ्रप्रभृतयः । कल्लूकः 'मृगाः', इत्यस्य अर्थं deer इति करोति, नायमर्थोऽत्र साधुः । अत्र तु सर्वपशुष्वयं शब्दः प्रयुक्तः ।

**अपुष्पाः फलवन्तो ये ते वनस्पतयः स्मृताः ।**
**पुष्पिणः फलिनश्चैव वृक्षास्तूभयतः स्मृताः ॥ ४७ ॥**

अपुष्पा इति ॥ नास्य श्लोकस्याभिधानकोशवन्नामसंकीर्तनमात्रम्, अप्रकृतत्वात् किंतु 'कर्मणां न जन्मनि' (१।६१) इति प्रकृतं तदर्थमिद-मुच्यते । ये वनस्पतयस्तेषां पुष्पमन्तरेणैव फलजन्म, इतरेभ्यस्तु पुष्पाणि जायन्ते तेभ्यः फलानीति । एवं वृक्षा उभयरूपाः । प्रथमान्तानीमानि ॥४७॥

४७. जो पुष्परहित फलवान् हैं (जिनमें बिना फूल आए फल आता है) वे वनस्पति [ नाम से ] स्मृत हैं—जो पुष्प वाले तथा फल वाले दोनों हैं वे वृक्ष [ नाम से स्मृत हैं ] ।

**गुच्छगुल्मं तु विविधं तथैव तृणजातयः ।**
**बीजकाण्डरुहाण्येव प्रताना वल्ल्य एव च ॥ ४८ ॥**

गुच्छगुल्मं इति ॥ मूलत एव यत्र लतासमूहो भवति, न च प्रकाण्डानि ते गुच्छा मल्लिकादयः । गुल्मा एकमूलाः संघातजाताः शरेक्षुप्रभृतयः । तृणजातय उलपाद्याः । प्रतानास्तन्तुयुक्तास्त्रपुसालाबूप्रभृतयः । वल्ल्यो गुडूच्यादयो या भूमेर्वृक्षमारोहन्ति । एतान्यपि बीजकाण्डरुहाणि । 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्' (पा. १।२।६९) इति नपुंसकत्वम् ॥ ४८ ॥

४८. विविध गुच्छ तथा गुल्म, तथा तृणजातियां प्रतान और वल्लियां—ये बीज तथा काण्ड से (कोई बीज से और कोई काण्ड से) पैदा होने वाली हैं ।

**तमसा बहुरूपेण वेष्टिताः कर्महेतुना ।**
**अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विताः ॥**

---

४८. प्रतान—प्र √ तन्—घञ् । विस्तारः, तन्तुः ।

रघुवंशम्—२. ८

लताप्रतानोद्ग्रथितैः स केशैरधिज्यधन्वा विचचार दावम् ।

गुल्मः—√ गुड् रक्षणे वेष्टने वा मक् । डलयोरैक्यात् डस्य लः । अप्रकाण्डे लतादौ–मेदिनीकोशः । अप्रकाण्डवृक्षः—अमरः । अविद्यमान प्रकाण्डस्तनुप्रकाण्डो वा बहुपत्रवान् मल्लीकिण्टीनलकमलवशावीरणादिर्मूलादारभ्य पूर्वभागः—भरतः ।

तमसेति ॥ एते वृक्षादयस्तमोगुणेन विचित्रदुःखफलेनाधर्मकर्महेतुकेन व्याप्ता अन्तश्चैतन्या भवन्ति । यद्यपि सर्वे चान्तरेव चेतयन्ते तथापि बहिर्व्यापारादिकार्यविरहात्तथा व्यपदिश्यन्ते । त्रिगुणारब्धत्वेऽपि तेषां तमोगुणबाहुल्यात्तथा व्यपदेशः । अतएव सुखदुःखसमन्विताः । सत्त्वस्यापि भावात्कदाचित्सुखलेशोऽपि जलधरजनितजलसेकादिना जायते ॥ ४९ ॥

४९. [पूर्व जन्म के] कर्म हैं हेतु जिनके ऐसे, नाना रूप वाले तमस् (तमोगुण) से वेष्टित ये अन्दर चेतना है जिनके ऐसे, सुख तथा दुःख से समन्वित हैं ।

**एतदन्तास्तु गतयो ब्रह्माद्याः समुदाहृताः ।**
**घोरेऽस्मिन्भूतसंसारे नित्यं सततयायिनि ॥ ५० ॥**

एतदन्ता इति ॥ स्थावरपर्यन्ता ब्रह्मोपक्रमा गतय उत्पत्तयः कथिताः । भूतानां क्षेत्रज्ञानां जन्ममरणप्रबन्धे दुःखबहुलतया भीषणे सदा विनश्वरे ५०

५०. इस घोर सतत गतिशील (परिवर्तनशील) भूतों (प्राणियों) के संसार (जन्म मरण चक्र) में, ब्रह्मा से लेकर इस (स्थावर) पर्यन्त गतियां कही गई हैं ।

इत्थं सर्गमभिधाय प्रलयदशामाह—

**एवं सर्वं स सृष्ट्वेदं मां चाचिन्त्यपराक्रमः ।**
**आत्मन्यन्तर्दधे भूयः कालं कालेन पीडयन् ॥ ५१ ॥**

एवं सर्वमिति ॥ एवं उक्तप्रकारेण । इदं सर्वं स्थावरजङ्गमं जगत्सृष्ट्वा स प्रजापतिरचिन्त्यशक्तिरात्मनि शरीरत्यागरूपमन्तर्धानं कृतवान् । सृष्टिकालं प्रलयकालेन नाशयन्प्राणिनां कर्मवशेन पुनःपुनः सर्गप्रलयान्करोतीत्यर्थः ५१

५१. अचिन्त्य है पराक्रम जिसका ऐसा वह (प्रजापति) इस प्रकार सब को (सब कुछ को) और मुझको पैदा करके बार-बार काल को काल से पीड़ित करता हुआ अपने आप में अन्तर्धान हो गया ।

अत्र हेतुमाह—

**यदा स देवो जागर्ति तदेदं चेष्टते जगत् ।**
**यदा स्वपिति शान्तात्मा तदा सर्वं निमीलति ॥ ५२ ॥**

यदेति ॥ यदा स प्रजापतिर्जागर्ति सृष्टिस्थिती इच्छति तदेदं जगत् श्वास-

प्रश्वासाहारादिचेष्टां लभते । यदा स्वपिति निवृत्तेच्छो भवति शान्तात्मा उप-संहृतमनाः तदेदं जगत्प्रलीयते ॥ ५२ ॥

५२. जब वह देव जागता है (जागता रहता है) तब यह जगत् चेष्टा करता है; जब शान्त मन वाला [वह] सोता है (सोता रहता है), तब सब-कुछ निमीलित (प्रलय को प्राप्त) हो जाता है।

पूर्वोक्तमेव स्पष्टयति —

**तस्मिन्स्वपति सुस्थे तु कर्मात्मानः शरीरिणः ।**
**स्वकर्मभ्यो निवर्तन्ते मनश्च ग्लानिमृच्छति ॥ ५३ ॥**

तस्मिन्स्वपतीति ॥ तस्मिन्प्रजापतौ निवृत्तेच्छे सुस्थे उपसंहृतदेहमनो-व्यापारे कर्मलब्धदेहाः क्षेत्रज्ञाः स्वकर्मभ्यो देहग्रहणादिभ्यो निवर्तन्ते । मनः सर्वेन्द्रियसहितं वृत्तिरहितं भवति ॥ ५३ ॥

५३. सुस्थ (सम्यक् स्थित, शान्त रूप से स्थित) उसके सोता हुआ होने पर कर्म है स्वरूप जिनका ऐसे शरीरधारी अपने कर्मों से निवृत्त हो जाते हैं और मन ग्लानि (वृत्तिरहितता) को प्राप्त हो जाता है।

इदानीं महाप्रलयमाह—

**युगपत्तु प्रलीयन्ते यदा तस्मिन्महात्मनि ।**
**तदायं सर्वभूतात्मा सुखं स्वपिति निर्वृतः ॥ ५४ ॥**

युगपत्त्विति ॥ एकस्मिन्नेव काले यदा तस्मिन्परमात्मनि सर्वभूतानि प्रलयं यान्ति तदायं सर्वभूतानामात्मा निर्वृतः निवृत्तजाग्रत्स्वप्नव्यापारः सुखं स्वपिति सुषुप्त इव भवति । यद्यपि नित्यज्ञानानन्दस्वरूपे परमात्मनि न सुषुप्त्यवस्था तथापि जीवधर्मोऽयमुपचर्यते ॥ ५४ ॥

---

५२. देवः—दिव्यगुणयुक्तः । 'देवो दानाद्वा दीपनाद्वा द्योतनाद्वा द्युस्थानो भवतीति वा' (निरुक्तम्) ।

५३. 'नु' इति निर्णये, कल्लूकस्तु...... ।
ग्लानिः—ग्लायत्यनेनास्मिन् वा । √ग्लै हर्षक्षये । ग्लै+निः (वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्) बलहीनता, स्वकार्याक्षमता—हेमचन्द्रः ।

कर्मात्मानः शरीरिणः—द्रष्टव्या टिप्पणी, मनुस्मृतिः १. १८ ।

५४. जब उस महान् आत्मा में एक साथ ही (सब प्राणी) प्रलीन हो जाते हैं, तब सब भूतों का यह आत्मा निर्वृत हुआ हुआ सुख से सोता है।

इदानीं प्रलयप्रसङ्गेन जीवस्योत्क्रमणमपि श्लोकद्वयेनाह—

**तमोऽयं तु समाश्रित्य चिरं तिष्ठति सेन्द्रियः ।**
**न च स्वं कुरुते कर्म तदोत्क्रामति मूर्तितः ॥ ५५ ॥**

तमोऽयमिति ॥ अयं जीवस्तमो ज्ञाननिवृत्तिं प्राप्य बहुकालमिन्द्रियादि-सहितस्तिष्ठति । न चात्मीयं कर्म श्वासप्रश्वासादिकं करोति तदा मूर्तितः पूर्व-देहादुत्क्रामति अन्यत्र गच्छति । लिङ्गशरीरावच्छिन्नस्य जीवस्य उद्गमात्तद्गमन-मप्युपपद्यते । तथा चोक्तं बृहदारण्यके (४।४।२) —'तमुत्क्रामन्तं प्राणो-ऽनूत्क्रामति, प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' इति । प्राणा इन्द्रियाणि ॥ ५५ ॥

५५. यह (जीव) तमोगुण का समाश्रय लेकर (तमोगुण से युक्त होकर) चिरकाल तक इन्द्रियों से युक्त रहता है और अपना कर्म नहीं करता तब यह मूर्ति (शरीर) से ऊपर उठता है (बाहर निकल जाता है)।

कदा देहान्तरं गृह्णातीत्यत आह—

**यदाणुमात्रिको भूत्वा बीजं स्थास्नु चरिष्णु च ।**
**समाविशति संसृष्टस्तदा मूर्तिं विमुञ्चति ॥ ५६ ॥**

यदाणुमात्रिक इति ॥ अणवो मात्राः पुर्यष्टकरूपा यस्य सोऽणुमात्रिकः । 'पुर्यष्टक' शब्देन भूतादीन्यष्टावुच्यन्ते । तदुक्तं सनन्देन-"भूतेन्द्रियमनोबुद्धि-वासनाकर्मवायवः । अविद्या चाष्टकं प्रोक्तं पुर्यष्टमृषिसत्तमैः ॥" ब्रह्मपुराणे-ऽप्युक्तम्—'पुर्यष्टकेन लिङ्गेन प्राणाद्येन स युज्यते । तेन बद्धस्य वै बन्धो

---

५४. तस्मिन् परात्मनि प्रलीनतैव प्रलयः ।

निर्वृतः—सुस्थः ।

५५. उत्क्रामति √उत् क्रमु पादविक्षेपे । 'तमःसमाश्रित्य'—इत्यनेन सूच्यते जीवः [illegible] करोति ।

न च स्वं कुरुते कर्म—मनुष्यः कर्मस्वरूपः—दृश्यताम् १. १८

मनुना प्रथमं मरीच्यादिभ्यः [illegible] [illegible]
[illegible] [illegible] । इदं तूच्यते—ब्रह्मणा शतसाहस्र-मिदं धर्मशास्त्रं कृत्वा मनुरध्यापित आसीत्, ततस्तेन च स्ववचनेन संक्षिप्य शिष्येभ्यः प्रतिपादितमित्यविरोधः । तथा च नारदः 'शतसाहस्रोऽयं ग्रन्थ' इति स्मरति स्म ॥ ५८ ॥

५८. उसने स्वयं इस शास्त्र को बनाकर आरम्भ में मुझे ही विधिपूर्वक ग्रहण कराया; मैंने मरीचि आदि मुनियों को [ग्रहण कराया]।

**एतद्वोऽयं भृगुः शास्त्रं श्रावयिष्यत्यशेषतः ।**
**एतद्धि मत्तोऽधिजगे सर्वमेषोऽखिलं मुनिः ॥ ५९ ॥**

एतद्वोऽयमित्यादि ॥ एतच्छास्त्रमयं भृगुः युष्माकमशेषं श्रावयिष्यति । यस्मादेषोऽशेषमेतन्मत्तोऽधीतवान् ॥ ५९ ॥

५९. यह भृगु तुम्हें यह शास्त्र पूरी तरह से सुनाएगा क्योंकि इन मुनि ने इस सब को मुझ से अधीत किया (पढ़ा) है।

**ततस्तथा स तेनोक्तो महर्षिर्मनुना भृगुः ।**
**तानब्रवीदृषीन्सर्वान् प्रीतात्मा श्रूयतामिति ॥ ६० ॥**

ततस्तथेति ॥ स भृगुर्मनुना तथोक्तोऽहं श्रावयिष्यामीति, यस्मादेतदधि-गम इत्युक्तस्ततोऽनन्तरमनेकमुनिसंनिधौ गुरुसंभावनया प्रीतमनास्तानृषीन् प्रत्युवाच—'श्रूयताम्' इति ॥ ६० ॥

६०. उस मनु से उस प्रकार कहा गया, प्रीतात्मा (प्रसन्न, प्रसन्न आत्मा या मन वाला) महर्षि भृगु उन सब ऋषियों को यह बोला 'सुना जाए'।

**स्वायंभुवस्यास्य मनोः षड्वंश्या मनवोऽपरे ।**
**सृष्टवन्तः प्रजाः स्वाः स्वा महात्मानो महौजसः ॥ ६१ ॥**

स्वायंभुवस्येति ॥ ब्रह्मपुत्रस्यास्य मनोः षड्वंशप्रभवा अन्ये मनवः । एवं

---

'तु' इति निरर्थकं, [illegible]...

मनुना तथा उक्तः उक्त., प्रीतात्मा । महोत्तरदायित्वपूर्णं कार्यं मयि विन्यस्तमिति प्रीतात्मा ।

कार्यकारिणः स्वस्वकाले सृष्टिपालनादावधिकृताः स्वाः स्वाः प्रजा उत्पादितवन्तः ॥ ६१ ॥

६१. स्वायंभुव (स्वयंभु के पुत्र) इस मनु के वंश में पैदा हुए हुए ६ दूसरे महात्मा महान् ओज वाले [मनुओं] ने अपनी-अपनी प्रजाओं को सृष्ट किया ।

**स्वारोचिषश्चोत्तमश्च तामसो रैवतस्तथा ।**
**चाक्षुषश्च महातेजा विवस्वत्सुत एव च ॥ ६२ ॥**

स्वारोचिषश्चेति ॥ एते भेदेन मनवः षड् नामतो निर्दिष्टाः ॥ ६२ ॥

६२. [६ मनु ये हैं] स्वारोचिष, उत्तम, तामस, रैवत, महातेजा (महातेजस्) और विवस्वत्सुत ।

**स्वायंभुवाद्याः सप्तैते मनवो भूरितेजसः ।**
**स्वे स्वेऽन्तरे सर्वमिदमुत्पाद्यापुश्चराचरम् ॥ ६३ ॥**

स्वायंभुवेति ॥ स्वायंभुवमुखाः सप्तामी मनवः स्वीयस्वीयाधिकारकाले इदं स्थावरजङ्गममुत्पाद्य पालितवन्तः ॥ ६३ ॥

६३. अत्यन्त तेज वाले स्वायंभुव आदि इन ७ मनुओं ने अपने अपने अन्तर (अधिकारकाल) में इस सब जङ्गम स्थावर को उत्पन्न करके पालित किया ।

इदानीमुक्तमन्वन्तरसृष्टिप्रलयादिकालपरिमाणपरिज्ञानायाह—

**निमेषा दश चाष्टौ च काष्ठा, त्रिंशत्तु ताः कला ।**
**त्रिंशत्कला मुहूर्तः स्यादहोरात्रं तु तावतः ॥ ६४ ॥**

निमेषा दश चाष्टाविति ॥ अक्षिपक्ष्मणोः स्वाभाविकस्य उन्मेषस्य सहकारी निमेषः । तेऽष्टादश काष्ठा नाम कालः । त्रिंशच्च काष्ठाः कलासंज्ञकः । त्रिंशत्कलाः मुहूर्ताख्यः कालः । तावत्त्रिंशन्मुहूर्तान् अहोरात्रं कालं विद्यात् । तावत इति द्वितीयानिर्देशात् 'विद्यात्' इत्यध्याहारः ॥ ६४ ॥

६४. १८ निमेष (पलक झँपने का काल) (एक) काष्ठा, ३० काष्ठाएँ

---

६३. स्वायंभुवमनुः—अत्र भूमिका पठ्यताम् ।
अधिकारकालः—भूमिका पठ्यताम् ।

(एक) कला, ३० कलाएं (एक) मुहूर्त है, उतने ही (३०) मुहूर्तों को अहोरात्र [ जानें ] ।

**अहोरात्रे विभजते सूर्यो मानुषदैविके ।**
**रात्रिः स्वप्नाय भूतानां चेष्टायै कर्मणामहः ॥ ६५ ॥**

अहोरात्रे इति ॥ मानुषदैवसम्बन्धिनौ दिनरात्रिकालावादित्यः पृथक्करोति । तयोर्मध्ये भूतानां स्वप्नार्थं रात्रिर्भवति, कर्मानुष्ठानार्थं च दिनम् ॥ ६५ ॥

६५. सूर्य मनुष्य तथा देवों से सम्बन्ध रखने वाले दिन-रात को विभक्त करता है, रात प्राणियों के सोने के लिए, दिन कर्मों की चेष्टा के लिए (कर्मों के अनुष्ठान के लिए) ।

**पित्र्ये रात्र्यहनी मासः, प्रविभागस्तु पक्षयोः ।**
**कर्मचेष्टास्वहः कृष्ण शुक्लः स्वप्नाय शर्वरी ॥ ६६ ॥**

पित्र्ये इति ॥ मानुषाणां मासः पितृणामहोरात्रे भवतः ॥ तत्र पक्षद्वयेन विभागः—कर्मानुष्ठानाय कृष्णपक्षोऽहः , स्वापार्थं शुक्लपक्षो रात्रिः ॥ ६६ ॥

६६. [मनुष्यों का एक] मास पितरों का दिनरात [ है ] । पक्षों का [ निम्न-लिखित ] विभाग [ होता है ], कृष्ण [ पक्ष ] कर्मचेष्टाओं में, [ लगाया जाने वाला ] दिन; शुक्ल [ पक्ष ] सोने के लिए रात [ है ]

**दैवे रात्र्यहनी वर्षं प्रविभागस्तयोः पुनः ।**
**अहस्तत्रोदगयनं रात्रिः स्याद् दक्षिणायनम् ॥ ६७ ॥**

---

६४. —अर्थात् १८ निमेष १ काष्ठा
३० काष्ठा १ कला
३० कला १ मुहूर्त
३० मुहूर्त १ अहोरात्र

६५. मानुषदैविके द्वि० मानुषदैवसम्बन्धिनी । अस्माकं मतेन मनुष्यदेव-सम्बन्धिनी ।

कर्मणां चेष्टायै—आलोच्यता टिप्पणी १, १८

तु—बहुशः सर्वत्र 'but' इत्यर्थं करोति । प्राय इदं निरर्थकं भवति । कुत्रचित्केवलं बलं ( stress ) प्रदानाय, कुत्रचिदन्यमर्थं ददाति यथा—'निर्मालिखितस्येव' ।

दैवे रात्र्यहनी वर्षमिति ॥ मानुषाणां वर्षं देवानां रात्रिंदिवे भवतः । तयोरयं विभागः—नराणामुदगयनं देवानामहः, तत्र प्रायेण दैवकर्मणामनुष्ठानं, दक्षिणायनं तु रात्रिः ॥ ६७ ॥

६७. [ मनुष्यों का एक ] वर्ष देवसंबन्धी (देवों के) रात-दिन, फिर उनका [ निम्नलिखित ] विभाग होता है। वहाँ (उस विषय में), उत्तरायण [ देवों का] दिन होता है, दक्षिणायन रात्रि ।

**ब्राह्मस्य तु क्षपाहस्य यत्प्रमाणं समासतः ।**
**एकैकशो युगानां तु क्रमशस्तन्निबोधत ॥ ६८ ॥**

ब्राह्मस्येति ॥ ब्रह्मणोऽहोरात्रस्य यत्परिमाणं प्रत्येकं युगानां च कृतादीनां तत्क्रमेण समासतः संक्षेपतः शृणुत । प्रकृतेऽपि कालविभागे यद्ब्रह्मणोऽहोरात्रस्य पृथक् प्रतिज्ञानं तत्तदीयज्ञानस्य पुण्यफलज्ञानार्थम् । वक्ष्यति च (१।७२) 'ब्राह्मं पुण्यमहर्विदुः' इति । तद्वेदनात्पुण्यं भवतीत्यर्थः ॥ ६८ ॥

६८. ब्राह्म (ब्रह्मन् से सम्बन्ध रखने वाले) रातदिन का [और] प्रत्येक युग का जो प्रमाण (परिमाण, माप) [है], क्रमशः उसे जानो (सुनो) !

**चत्वार्याहुः सहस्राणि वर्षाणां तत्कृतं युगम् ।**
**तस्य तावच्छती संध्या संध्यांशश्च तथाविधः ॥ ६९ ॥**

चत्वार्याहुरिति ॥ चत्वारि वर्षसहस्राणि कृतयुगकालं मन्वादयो वदन्ति तस्य तावद्वर्षशतानि संध्या संध्यांशश्च भवति । युगस्य पूर्वा संध्या, उत्तरश्च संध्यांशः । तदुक्तं विष्णुपुराणे—'तत्प्रमाणैः शतैः संध्या पूर्वा तत्राभिधीयते । संध्यांशकश्च तत्तुल्यो युगस्यानन्तरो हि यः ॥ संध्यासंध्यांशयोरन्तर्यः कालो मुनिसत्तम । युगाख्यः स तु विज्ञेयः कृतत्रेतादिसंज्ञकः ॥' वर्षसंख्या चेयं दिव्यमानेन, तस्यैवानन्तरप्रकृतत्वात् । 'दिव्यैर्वर्षसहस्रैस्तु कृतत्रेतादिसंज्ञितम् । चतुर्युगं द्वादशभिस्तद्विभागं निबोध मे ॥' इति विष्णुपुराणवचनाच्च ॥६९॥

६९. [ देवों के ] वर्षों के चार हजार (चार हजार वर्षों) का [ वे ] वह कृतयुग (सत्ययुग) कहते हैं—उसकी उतनी शती (शताब्दी) संध्या [ है ], और

---

६८. 'तु' अत्र निरर्थकं, क्षपाहस्तु. . . .

तथाविध (उतना) संध्यांश है ।—भाव यह है कि युग से पूर्व ४०० संध्याएँ और युग के अनन्तर ४०० संध्यांश होते हैं ।

**इतरेषु ससंध्येषु ससंध्यांशेषु च त्रिषु ।**
**एकापायेन वर्तन्ते सहस्राणि शतानि च ॥ ७० ॥**

इतरेष्विति ॥ अन्येषु त्रेताद्वापरकलियुगेषु संध्यासंध्यांशसहितेषु एकहान्या सहस्राणि शतानि च भवन्ति । तेनैवं संपद्यते—त्रीणि वर्षसहस्राणि त्रेतायुगं, तस्य त्रीणि वर्षशतानि संध्या संध्यांशश्च । एवं द्वे वर्षसहस्रे द्वापरः, तस्य द्वे वर्षशते संध्या संध्यांशश्च । एवं वर्षसहस्रं कलिः, तस्यैकवर्षशतं संध्या संध्यांशश्च ॥ ७० ॥

७०. और दूसरे तीन संध्याओं से युक्त और संध्यांशों से युक्त [युगों] के—एक के हटाने से सहस्र और शत होते हैं ।

**यदेतत्परिसंख्यातमादावेव चतुर्युगम् ।**
**एतद्द्वादशसाहस्रं देवानां युगमुच्यते ॥ ७१ ॥**

---

६९. बल्हरः 'संध्यांश' इत्यस्यापि twilight इत्येवार्थं करोति । नायमर्थः साधुः ।

७०. ३ हजार वर्ष=त्रेता युग
३ सौ वर्ष=संध्या
३ सौ वर्ष=संध्यांश
२ हजार वर्ष=द्वापर युग
२ सौ वर्ष=संध्या
२ सौ वर्ष=संध्यांश
१ हजार वर्ष=कलियुग
१ सौ वर्ष=संध्या
१ सौ वर्ष=संध्यांश

अत्रापि बल्हरः संध्यांश इत्यस्यार्थं 'twilight' इति करोति । नायमर्थः साधुः ।

**तस्य सोऽहर्निशस्यान्ते प्रसुप्तः प्रतिबुध्यते ।**
**प्रतिबुद्धश्च सृजति मनः सदसदात्मकम् ॥ ७४ ॥**

तस्येति ॥ स ब्रह्मा तस्य पूर्वोक्तस्य स्वीयाहोरात्रस्य समाप्तौ प्रतिबुद्धो भवति । प्रतिबुद्धश्च स्वीयं मनः सृजति भूर्लोकादिसृष्ट्यै नियुङ्क्ते न तु जनयति । तस्य महाप्रलयानन्तरं जातत्वादनष्टत्वाच्च, अवान्तरप्रलये भूर्लोकादिविषयव्यापारनाशात् सृष्ट्यर्थं मनोनियुक्तिरेव मनःसृष्टिः । तथा च पुराणे श्रुतौ— 'मनः सिसृक्षया युक्तं सर्गाय निदधे पुनः' इति । अथवा 'मनः'शब्दोऽत्र महत्तत्त्वपर एव । यद्यपि तन्महाप्रलयानन्तरमुत्पन्नं, 'महान्तमेव च' (१।१८) इत्यादिना सृष्टिरपि तस्योक्ता, तथाप्यनुक्तं भूतानामुत्पत्तिक्रमं वक्तुमिह कथञ्चित् महाप्रलयानन्तरितामेव महदादिसृष्टिं भूतसृष्टिं च हिरण्यगर्भस्यापि परमात्मत्वात्तत्कर्तृतामनुवदति । एतेनेदमुक्तं भवति—ब्रह्मा महाप्रलयानन्तरितसृष्ट्यादौ परमात्मरूपेण महदादितत्त्वानि जगत्सृष्ट्यर्थं सृजति । अत एव शेषे वक्ष्यति (१।७८) 'इत्येषा सृष्टिरादितः' इति । अवान्तरप्रलयानन्तरं तु मनःप्रभृतिसृष्ट्यभिधानकर्मणैव प्राथम्याप्राप्तेः 'इत्येषा सृष्टिरादितः' इति निष्प्रयोजनोऽनुवादः स्यात् ॥ ७४ ॥

७४. वह (ब्रह्मा) उस अहोरात्र के अन्त में सोया हुआ जागता है (सोकर उठता है); और उठा हुआ सत्-असत्-स्वरूप मन को सृष्ट करता है ।

**मनः सृष्टिं विकुरुते चोद्यमानं सिसृक्षया ।**
**आकाशं जायते तस्मात्तस्य शब्दं गुणं विदुः ॥ ७५॥**

मनः सृष्टिमिति ॥ मनो महान् सृष्टिं करोति । परमात्मनः स्रष्टुमिच्छया प्रेर्यमाणं तस्मादाकाशमुत्पद्यते । तस्य पूर्वोक्तानुसाराहङ्कारतन्मात्रक्रमेणाकाशस्य शब्दं गुणं विदुर्मन्वादयः ॥ ७५ ॥

७५. सृष्टि करने की इच्छा से प्रेर्यमाण मन सृष्टि को विविधता से करता है । उससे आकाश उत्पन्न होता है । शब्द को उस [ आकाश ] का गुण जानते हैं ।

---

७५. जायते-प्रादुर्भवति-प्रकटीभवति— √जनी प्रादुर्भावे ।

तपोज्ञानयज्ञदानानां चतुर्णां कीर्तनात्तस्य पादचतुष्टयेन संपूर्णत्वात्सर्वेन निष्पन्नाः सत्ययुगे समस्ता इत्यर्थः । तथा सत्यं च कृतयुगमासीत् । सकल-धर्मश्रेष्ठत्वात्सत्यस्य पृथग्ग्रहणम् । तथा न शास्त्रातिक्रमेण धनविद्यादेरागम उत्पत्तिर्मनुष्यान्प्रति संपद्यते ॥ ८१ ॥

८१. कृतयुग (सत्ययुग) में चार पाद (पाद-पाँव, चतुर्थांश) वाला पूर्ण [अतः] सत्य [होता है]। [उस समय] मनुष्यों के प्रति अधर्म से कोई आजीविका नहीं होती है (मनुष्य कमाने में बिल्कुल भी बेईमानी नहीं करते)।

**इतरेष्वागमाद्धर्मः पादशस्त्ववरोपितः ।**
**चौरिकानृतमायाभिर्धर्मश्चापैति पादशः ॥ ८२ ॥**

इतरेष्विति ॥ सत्ययुगादन्येषु त्रेतादिषु आगमादधर्मेण धनविद्यादेरर्ज-नात्तस्यैव पूर्वश्लोके प्रकृतत्वात् । आगमाद्वेदादिति तु गोविन्दराजो मेधाति-थिश्च । धर्मो यागादिः यथाक्रमं प्रतियुगं पादं पादमवरोपितो हीनः कृतस्तथा धनविद्यार्जितोऽपि यो धर्मः प्रवर्तते सोऽपि चौर्यमिथ्याछद्मभिः प्रतियुगं पादशो ह्रासाद् व्यपगच्छति । त्रेतादियुगे सह चौरिकानृतच्छद्मना न यथासंख्यम् । सर्वेषु सर्वेषां दर्शनात् ॥ ८२ ॥

८२. दूसरे [युगों] में आगम (आजीविका, कमाई) के कारण से धर्म चोरी, झूठ और माया (छल-कपट) से एक-एक पाद करके हीन होता जाता है और पाद-पाद करके धर्म दूर होता जाता है (कम होता जाता है)।

**अरोगाः सर्वसिद्धार्थाश्चतुर्वर्षशतायुषः ।**
**कृते त्रेतादिषु ह्येषामायुर्ह्रसति पादशः ॥ ८३ ॥**

अरोगा इति ॥ रोगनिमित्ताधर्माभावादरोगाः सर्वसिद्धकाम्यफलाः प्रति-बन्धकाधर्माभावाच्चतुर्वर्षशतायुष्ट्वं च स्वाभाविकम् । अधिकायुःप्रापककर्म-वशादधिकायुषोऽपि भवन्ति । तेन 'दशवर्षसहस्राणि रामो राज्यमकारयत्' इत्याद्यविरोधः । 'शतायुर्वै पुरुषः' इत्यादिश्रुतौ तु शतशब्दो बहुत्वपरः कलियुगे वा । एवंरूपा मनुष्याः कृते भवन्ति । त्रेतादिषु पुनः पादं पाद-मायुरल्पं भवतीति ॥ ८३ ॥

८३. रोग से रहित, सफल है सब कार्य जिनके ऐसे ४०० वर्ष की आयु वाले, [ लोग ] सत्ययुग में [ होते हैं ] । त्रेता इत्यादि में इनकी पाद-पाद करके आयु कम हो जाती है ।

**वेदोक्तमायुर्मर्त्यानामाशिषश्चैव कर्मणाम् ।**
**फलन्त्यनुयुगं लोके प्रभावश्च शरीरिणाम् ॥ ८४ ॥**

वेदोक्तमायुरिति ॥ 'शतायुर्वै पुरुषः' इत्यादि वेदोक्तमायुः, कर्मणां च काम्यानां फलविषयाः प्रार्थनाः, ब्राह्मणादीनां च शापानुग्रहसामर्थ्यादिप्रभावा-युगानुरूपेण फलन्ति ॥ ८४ ॥

८४. मर्त्यों की वेदोक्त आयु, कर्मों की फल-विषयक प्रार्थनाएँ और शरीरधारियों का प्रभाव लोक में युग के अनुसार फलते हैं ।

**अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरेऽपरे ।**
**अन्ये कलियुगे नृणां युगह्रासानुरूपतः ॥ ८५ ॥**

अन्य इति ॥ कृतयुगेऽन्ये धर्मा भवन्ति । त्रेतादिष्वपि युगापचयानु-रूपेणाधर्मवैलक्षण्यम् ॥ ८५ ॥

८५. मनुष्यों के युगह्रास (युगों में कमी) के अनुरूप कृतयुग में अन्य, त्रेता में अन्य, द्वापर में अन्य एवं कलियुग में अन्य धर्म हैं ✓

**तपः परं कृतयुगे त्रेतायां ज्ञानमुच्यते ।**
**द्वापरे यज्ञमेवाहुर्दानमेकं कलौ युगे ॥ ८६ ॥**

तपः परमिति ॥ यद्यपि तपःप्रभृतीनि सर्वाणि सर्वयुगेष्वनुष्ठेयानि तथापि सत्ययुगे तपः प्रधानं महाफलमिति ज्ञाप्यते । एवमात्मज्ञानं त्रेतायुगे, द्वापरे यज्ञः, दानं कलौ ॥ ८६ ॥

८६. कृतयुग में तप, त्रेता में ज्ञान उत्कृष्ट कहा जाता है । द्वापर में यज्ञ को ही और कलियुग में एकमात्र दान को ही उत्कृष्ट कहते हैं ।

---

८३. 'अर्थाः'—कु०—काम्यफलानि । 'अर्थ इत्यस्य लक्षणम्' इत्यर्थः [illegible] । पादः=चतुर्थांशः ।

**सर्वस्यास्य तु सर्गस्य गुप्त्यर्थं स महाद्युतिः ।**
**मुखबाहूरुपज्जानां पृथक्कर्माण्यकल्पयत् ॥ ८७ ॥**

सर्वस्यास्येति ॥ स ब्रह्मा महातेजा अस्य सर्गस्य समस्तस्य 'अग्नौ प्रास्ताहुतिः' (३।७६) इति न्यायेन रक्षार्थं मुखादिजातानां ब्राह्मणादीनां विभागेन कर्माणि दृष्टादृष्टार्थानि निर्मितवान् ॥ ८७ ॥

८७. महान् द्युति वाले उस [ ब्रह्मा ] ने इस सारी सृष्टि की रक्षा के लिए मुख, बाहु, जंघा तथा पैर से पैदा होने वालों के पृथक् कार्यों की व्यवस्था की ।

**अध्यापनमध्ययनं यजनं याजनं तथा ।**
**दानं प्रतिग्रहं चैव ब्राह्मणानामकल्पयत् ॥ ८८ ॥**

अध्यापनमिति ॥ अध्यापनादीनामिह सृष्टिप्रकरणे सृष्टिविशेषतयाभिधानं विधिस्तेषामुत्तरत्र भविष्यति । अध्यापनादीनि षट् कर्माणि ब्राह्मणानां कल्पितवान् ॥ ८८ ॥

८८. पढ़ाना, पढ़ना, यज्ञ करना तथा यज्ञ कराना, दान देना तथा दान लेना—यह ब्राह्मणों की (ब्राह्मणों के लिए) व्यवस्था की ।

**प्रजानां रक्षणं दानमिज्याऽध्ययनमेव च ।**
**विषयेष्वप्रसक्तिश्च क्षत्रियस्य समासतः ॥ ८९ ॥**

प्रजानामिति ॥ प्रजारक्षणादीनि क्षत्रियस्य कर्माणि कल्पितवान् । विषयेषु गीतनृत्यवनितोपभोगादिष्वप्रसक्तिस्तेषां पुनरनासेवनम् । समासतः संक्षेपेण ॥८९॥

८९. प्रजाओं की रक्षा, दान, यज्ञ और अध्ययन और विषयों में न फँसना; संक्षेप से क्षत्रियों की—

**पशूनां रक्षणं दानमिज्याऽध्ययनमेव च ।**
**वणिक्पथं कुसीदं च वैश्यस्य कृषिमेव च ॥ ९० ॥**

पशूनामिति ॥ पशूनां पालनादीनि वैश्यस्य कल्पितवान् । वणिक्पथं स्थलजलादिना वाणिज्यम् । कुसीदं वृद्ध्या धनप्रयोगः ॥ ९० ॥

९०. पशुओं का रक्षण, दान, यज्ञ और अध्ययन व्यापार, ब्याज पर धन देना और कृषि वैश्य को—

**एकमेव तु शूद्रस्य प्रभुः कर्म समादिशत् ।**

**एतेषामेव वर्णानां शुश्रूषामनसूयया ॥ ९१ ॥**

एकमेवेति ॥ प्रभुर्ब्रह्मा शूद्रस्य ब्राह्मणादिवर्णत्रयपरिचर्यात्मकं कर्म निर्मितवान् । एकमेवेति प्राधान्यप्रदर्शनार्थम् । दानादेरपि तस्य विहितत्वात् । अनसूयया गुणानिन्दया ॥ ९१ ॥

इदानीं प्राधान्येन सर्गरक्षणार्थत्वाद् ब्राह्मणस्य तदुपकारकधर्माभिधानत्वाच्चास्य शास्त्रस्य, ब्राह्मणस्य स्तुतिमाह—

९१. प्रभु ने शूद्र का (के लिए) एक ही कर्म समादिष्ट किया—इन्हीं वर्णों की अनसूया से सेवा को

**ऊर्ध्वं नाभेर्मेध्यतरः पुरुषः परिकीर्तितः ।**

**तस्मान्मेध्यतमं त्वस्य मुखमुक्तं स्वयंभुवा ॥ ९२ ॥**

ऊर्ध्वमिति ॥ सर्वत एव पुरुषो मेध्यः, नाभेरूर्ध्वमतिशयेन मेध्यः, ततोऽपि मुखस्य मेध्यतमत्वं ब्रह्मणोक्तम् ॥ ९२ ॥

९२. मनुष्य को नाभि से ऊपर अधिक पवित्र कहा गया है—अतः स्वयंभू ने इसके मुख को मेध्यतम कहा है ।

ततः किमत आह—

**उत्तमाङ्गोद्भवाज्ज्यैष्ठ्याद् ब्रह्मणश्चैव धारणात् ।**

**सर्वस्यैवास्य सर्गस्य धर्मतो ब्राह्मणः प्रभुः ॥ ९३ ॥**

उत्तमाङ्गोद्भवादिति ॥ उत्तमाङ्गं मुखं, तदुद्भवत्वात् क्षत्रियादिभ्यः पूर्वोत्पन्नत्वादध्यापनव्याख्यानादिना श्रुतस्यातिशयेन वेदधारणात्सर्वस्यास्य जगतो धर्मानुशासनेन ब्राह्मणः प्रभुः । 'संस्कारस्य विशेषात् वर्णानां ब्राह्मणः प्रभुः' ॥ ९३ ॥

---

९१. अनसूया = गुणेषु दोषारोपोऽसूया—तद्विपरीतमनसूया ।

**भूतानां प्राणिनः श्रेष्ठाः प्राणिनां बुद्धिजीविनः ।**
**बुद्धिमत्सु नराः श्रेष्ठा नरेषु ब्राह्मणाः स्मृताः ॥ ९६ ॥**

भूतानामिति ॥ भूतारब्धानां स्थावरजङ्गमानां मध्ये प्राणिनः कीटादयः श्रेष्ठाः, कदाचित्सुखांशत्वात्; तेषामपि बुद्धिजीविनः सार्थनिरर्थदेशोपसर्पणापसर्पणकारिणः पश्वादयः । तेभ्योऽपि मनुष्याः, प्रकृष्टज्ञानसंबन्धात् । तेभ्योऽपि ब्राह्मणाः, सर्वपूज्यत्वादपवर्गाधिकारयोग्यत्वाच्च ॥ ९६ ॥

९६. भूतों में प्राणी श्रेष्ठ हैं; प्राणियों में बुद्धिजीवी [श्रेष्ठ हैं]; बुद्धिमानों में नर श्रेष्ठ हैं, नरों में ब्राह्मण [श्रेष्ठ] स्मृत है।

**ब्राह्मणेषु च विद्वांसो विद्वत्सु कृतबुद्धयः ।**
**कृतबुद्धिषु कर्तारः कर्तृषु ब्रह्मवेदिनः ॥ ९७ ॥**

ब्राह्मणेषु चेति ॥ ब्राह्मणेषु तु मध्ये विद्वांसो महाफलज्योतिष्टोमादिकर्माधिकारित्वात्; तेभ्योऽपि कृतबुद्धयः अनागतेऽपि कृतं मयेति बुद्धिर्येषाम् । शास्त्रोक्तानुष्ठानेषूत्पन्नकर्तव्यताबुद्धय इत्यर्थः; तेभ्योऽपि अनुष्ठातारः । हिताहितप्राप्तिपरिहारभागित्वात् । तेभ्योऽपि ब्रह्मविदः, मोक्षलाभात् ॥ ९७ ॥

९७. ब्राह्मणों में विद्वान्, विद्वानों में कृतबुद्धि, कृतबुद्धियों में कर्ता, कर्ताओं में ब्रह्मवेदी (ब्रह्मज्ञानी) [श्रेष्ठ हैं]।

**उत्पत्तिरेव विप्रस्य मूर्तिर्धर्मस्य शाश्वती ।**
**स हि धर्मार्थमुत्पन्नो ब्रह्मभूयाय कल्पते ॥ ९८ ॥**

उत्पत्तिरेवेति ॥ ब्राह्मणदेहजन्ममात्रमेव धर्मस्य शरीरमविनाशि । यस्मादसौ धर्मार्थं जातः धर्मानुगृहीतात्मज्ञानेन मोक्षाय संपद्यते ॥ ९८ ॥

९८. ब्राह्मण की उत्पत्ति ही धर्म की शाश्वत मूर्ति है (शरीर धारण करना है)। धर्म के लिए उत्पन्न हुआ वह ब्रह्मरूप होने के लिए समर्थ होता है।

**ब्राह्मणो जायमानो हि पृथिव्यामधिजायते ।**
**ईश्वरः सर्वभूतानां धर्मकोशस्य गुप्तये ॥ ९९ ॥**

---

९७. कृता बुद्धिर्यैस्ते कृतबुद्धयः—सुसंस्कृतबुद्धयः । कर्तारः—विचारितं क्रियाकलापं विधिनिर्वाहकाः ।

ब्राह्मण इति ॥ यस्माद् ब्राह्मणो जायमानः पृथिव्यामधि उपरि भवति । श्रेष्ठ इत्यर्थः । सर्वभूतानां धर्मसमूहरक्षार्थं प्रभुः । ब्राह्मणोपदिष्टत्वात्सर्वधर्माणाम् ॥ ९९ ॥

९९. पैदा होता हुआ ब्राह्मण धर्मकोश की सुरक्षा के लिए पृथ्वी पर सब भूतों का स्वामी हो जाता है ।

**सर्वं स्वं ब्राह्मणस्येदं यत्किंचिज्जगतीगतम् ।**
**श्रैष्ठ्येनाभिजनेनेदं सर्वं वै ब्राह्मणोऽर्हति ॥ १०० ॥**

सर्वं स्वमिति ॥ यत्किंचिज्जगद्गतं धनं तद् ब्राह्मणस्य स्वमिति स्तुत्योच्यते । स्वमिव स्वं, न तु स्वमेव । ब्राह्मणस्यापि मनुना स्तेयस्य वक्ष्यमाणत्वात् । तस्माद् ब्रह्ममुखोद्भवत्वेनाभिजनेन श्रेष्ठतया सर्वं ब्राह्मणोऽर्हति सर्वग्रहणयोग्यो भवतीत्येव । वै अवधारणे ॥ १०० ॥

१००. जो कुछ भी जगती में [स्थित] सम्पत्ति है, वह सब ब्राह्मण की है—जन्म सम्बन्धी (ब्रह्मा के मुख से जन्म सम्बन्धी) श्रेष्ठता के कारण—सब वस्तुओं को ब्राह्मण [ग्रहण करने] योग्य है ।

**स्वमेव ब्राह्मणो भुङ्क्ते स्वं वस्ते स्वं ददाति च ।**
**आनृशंस्याद् ब्राह्मणस्य भुञ्जते हीतरे जनाः ॥ १०१ ॥**

स्वमेवेति ॥ यत्परस्याप्यन्नं ब्राह्मणो भुङ्क्ते, परस्य च वस्त्रं परिधत्ते, परस्य गृहीत्वान्यस्मै ददाति तदपि ब्राह्मणस्य स्वमेव । पूर्ववत्स्तुतिः । एवं सति ब्राह्मणस्य कारुण्यादन्ये भोजनादि कुर्वन्ति ॥ १०१ ॥

१०१. ब्राह्मण अपने ही [भोजन] को खाता है, अपने ही [वस्त्र] को धारण करता है, अपने ही [धन] को देता है—ब्राह्मण की करुणा के कारण दूसरे लोग भोग करते हैं—अर्थात् सब कुछ ब्राह्मण का है—ब्राह्मण जब कुछ भोगता है तो अपनी चीज भोगता है, दूसरे लोग उसके दान पर जीते हैं ।

---

१००. श्रैष्ठ्येनाभिजनेन—कुल्लूकः श्रैष्ठ्येन-अभिजनेन श्रेष्ठतया उत्तम-जन्मना ; बल्हरः आभिजनेन श्रैष्ठ्येन—on account of the excellence of his origin—अत्र बल्हरः साधीयान् । आभिजनम्—अभिजनसंबन्धि ।

इदानीं प्रकृष्टब्राह्मणकर्मविधायकतया शास्त्रप्रशंसां प्रक्रमते—

**तस्य कर्मविवेकार्थं शेषाणामनुपूर्वशः ।**
**स्वायंभुवो मनुर्धीमानिदं शास्त्रमकल्पयत् ॥ १०२ ॥**

तस्य कर्मविवेकार्थमिति ॥ ब्राह्मणस्य कर्मज्ञानार्थं शेषाणां क्षत्रियादीनां च स्वायंभुवो ब्रह्मपुत्रो धीमान् सर्वविषयज्ञानवान्मनुरिदं शास्त्रं विरचितवान् ॥ १०२ ॥

१०२. उस (ब्राह्मण) के [तथा] क्रमशः बचे हुओं (अन्य क्षत्रिय-आदि) के कर्म-विवेक के लिए स्वयंभू-पुत्र, धीमान् मनु ने इस शास्त्र की रचना की ।

**विदुषा ब्राह्मणेनेदमध्येतव्यं प्रयत्नतः ।**
**शिष्येभ्यश्च प्रवक्तव्यं सम्यङ् नान्येन केनचित् ॥ १०३ ॥**

विदुषेति ॥ एतच्छास्त्राध्ययनफलज्ञेन ब्राह्मणेन एतस्य शास्त्रस्य व्याख्यानाध्यापनोचितं प्रयत्नतोऽध्ययनं कर्तव्यं, शिष्येभ्यश्चेदं व्याख्यातव्यं; नान्येन क्षत्रियादिना । अध्ययनमात्रं तु व्याख्यानाध्यापनरहितं क्षत्रियवैश्ययोरपि 'निषेकादिश्मशानान्तः' (२।१६) इत्यादिना विधास्यते । अनुवादमात्रमेतदिति मेधातिथिमतम् । तन्न मनोहरम्; द्विजैरध्ययनं ब्राह्मणेनैवाध्यापनव्याख्याने इत्यस्याप्राप्तत्वात् । यत्तु 'अधीयीरंस्त्रयो वर्णाः' (१०।१) इत्यादि तद्वेदविषयमिति वक्ष्यति । विप्रेणैवाध्यापनमिति विधानेन संभवत्यप्यनुवादत्वमस्येति वृथा मेधातिथिभ्रमः ॥ १०३ ॥

१०३. यह (शास्त्र) विद्वान् ब्राह्मण द्वारा प्रयत्न से अध्ययन किया जाना चाहिए और भली-भाँति शिष्यों (दूसरों) के लिए इसका प्रवचन किया जाना चाहिए, किसी अन्य (ब्राह्मणेतर) द्वारा नहीं ।

**इदं शास्त्रमधीयानो ब्राह्मणः शंसितव्रतः ।**
**मनोवाग्देहजैर्नित्यं कर्मदोषैर्न लिप्यते ॥ १०४ ॥**

---

१०२. कर्मविवेक—कर्म-विभाग—'किसका क्या कर्म है' यह विभाग, 'किसे क्या करना चाहिए क्या नहीं' यह विभाग ।

इदं शास्त्रमिति ॥ इदं शास्त्रं पठन्नेतदर्थं ज्ञात्वा शंसितव्रतोऽनुष्ठित-व्रतः मनोवाक्कायसंभवैः पापैर्न संबध्यते ॥ १०४ ॥

१०४. इस शास्त्र का नित्य अध्ययन करता हुआ अनुष्ठितव्रत ब्राह्मण मन, वाणी और देह से पैदा होने वाले कर्मदोषों से नित्य लिप्त नहीं होता (कभी लिप्त नहीं होता)।

**पुनाति पङ्क्तिं वंश्यांश्च सप्त सप्त परावरान् ।**
**पृथिवीमपि चैवेमां कृत्स्नामेकोऽपि सोऽर्हति ॥ १०५ ॥**

पुनातीति ॥ इदं शास्त्रमधीयान इत्यनुवर्तते । अपाङ्क्तयोपहतां पङ्क्तिमा-नुपूर्व्या निविष्टजनसमूहं पवित्रीकरोति । वंशभवांश्च सप्त परान्पित्रादीन्, अवरांश्च पुत्रादीन् । पृथिवीमपि सर्वां सकलधर्मज्ञतया पात्रत्वेन ग्रहीतुं योग्यो भवति ॥ १०५ ॥

१०५. वह [ किसी भी ] पंक्ति को, सात सात पहले और बाद के वंश में पैदा हुओं को, पवित्र कर देता है—और वह अकेला इस सारी पृथ्वी को [ ग्रहण करने के, इसका स्वामी बनने के ] योग्य है।

**इदं स्वस्त्ययनं श्रेष्ठमिदं बुद्धिविवर्धनम् ।**
**इदं यशस्यमायुष्यमिदं निःश्रेयसं परम् ॥ १०६ ॥**

इदमिति ॥ अभिप्रेतार्थस्याविनाशः स्वस्ति, तस्यायनं प्रापकम् ; एतच्छास्त्र-स्वाध्ययनं स्वस्त्ययनं जपहोमादिबोधकत्वाच्च श्रेष्ठं स्वस्त्ययनान्तरादुत्कृष्टं बुद्धिविवर्धनम् । एतच्छास्त्राभ्यासेनाशेषविधिनिषेधपरिज्ञानात् । यशसे हितं यशस्यं विद्वत्तया ख्यातिलाभात्परं प्रकृष्टम् । निःश्रेयसं निःश्रेयसस्य मोक्ष-स्योपायोपदेशकत्वात् ॥ १०६॥

---

१०४. शंसितव्रतः—शंसितानि व्रतानि येन सः—अपने नियम अथवा कर्तव्य कर्म जिसने भली-भाँति किये हैं, या करता है।

१०५. पङ्क्ति—कुल्लूक—विशिष्टजनसमूहः कतार—company सदपङ्क्ति—पङ्क्यते व्यक्तीक्रियते श्रेणीविशेषेण । √पचि व्यक्तीकरणे । भावे क्तिन् । पञ्चयति विस्तारयति जातिस्थानविशेषम् । √पचि विस्तारे । कर्तरि क्तिन् । सजातीयसंस्थानविशेषः ।

१०६. यह (इस शास्त्र को पढ़ना) स्वस्ति का श्रेष्ठ साधन है, यह बुद्धि का बढ़ाने वाला है। यह यश देने वाला है, यह आयु देने वाला है, [यह] परम निःश्रेयस (महाकल्याण, मोक्ष) है।

**अस्मिन्धर्मोऽखिलेनोक्तो गुणदोषौ च कर्मणाम् ।**
**चतुर्णामपि वर्णानामाचारश्चैव शाश्वतः ॥ १०७ ॥**

अस्मिन्धर्म इति ॥ अस्मिन्कात्स्न्येन धर्मोऽभिहित इति शास्त्रप्रशंसा । कर्मणां च विहितनिषिद्धानामिष्टानिष्टफले । वर्णचतुष्टयस्यैव गुरुपरम्पर आचारः शाश्वतः पारम्पर्यागतः । धर्मत्वेऽप्याचारस्य प्राधान्यख्यापनार्थं पृथङ्निर्देशः ॥ १०७ ॥

प्राधान्यमेव स्पष्टयति—

१०७. इस (शास्त्र) में धर्म पूर्णतया कहा गया है, और कर्मों के गुण-दोष [कहे गए हैं], और चारों वर्णों का शाश्वत आचार [कहा गया है]।

**आचारः परमो धर्मः श्रुत्युक्तः स्मार्त एव च ।**
**तस्मादस्मिन्सदा युक्तो नित्यं स्यादात्मवान्द्विजः ॥ १०८ ॥**

आचार इति ॥ युक्तो यत्नवान् आत्महितेच्छुः । सर्वस्यात्मास्तीति आत्म-शब्देन आत्महितेच्छा लक्ष्यते ॥ १०८ ॥

१०८. श्रुति में कहा गया और स्मृति में प्रतिपादित आचार परम धर्म है, इस लिए आत्मवान् द्विज इसमें सदा निरत रहे।

---

१०६. स्वस्ति—कुल्लूकः—अभिप्रेतस्यार्थस्याविनाशः ।

सु √अस्—क्तिच् । अस्तीति विभक्तिप्रतिरूपकमव्ययम् । आशीः । क्षेमम् (निरुपद्रवः) । पुण्यादि (अमरः) । स्वस्ति मङ्गलाशीर्वादपापनिर्णेजनादिष्विति भागुरिः (भरतः) ।

१०८. आत्मवान्—आत्माऽस्यास्तीति 'आत्मवान्' कुल्लूकः—आत्महितेच्छा-वान्—बूह्लरः who possesses regard for himself.

अस्माकं मतेन, यस्यात्मा शक्तिशाली, यः स्वाभिमानयुक्तः, यस्यात्मा स्ववशे तिष्ठति, य आत्महननं न करोति, स आत्मवान् ।

**आचाराद्विच्युतो विप्रो न वेदफलमश्नुते।**
**आचारेण तु संयुक्तः संपूर्णफलभाग्भवेत् ॥ १०९ ॥**

आचारादिति ॥ आचाराद्विच्युतो विप्रो न वैदिकं फलं लभेत्। आचारयुक्तः पुनः समग्रफलभाग्भवति ॥ १०९ ॥

१०९. आचार से गिरा हुआ वेद के फल को प्राप्त नहीं करता, आचार से युक्त हुआ संपूर्ण फल को प्राप्त करने-वाला होता है।

**एवमाचारतो दृष्ट्वा धर्मस्य मुनयो गतिम्।**
**सर्वस्य तपसो मूलमाचारं जगृहुः परम् ॥ ११० ॥**

एवमिति ॥ उक्तप्रकारेणाचाराद्धर्मप्राप्तिं मुनयो बुद्ध्वा तपसश्चान्द्रायणादेः समग्रस्य कारणमाचारमनुष्ठेयतया गृहीतवन्तः। उत्तरत्र वक्ष्यमाणस्याचारस्येह स्तुतिः शास्त्रस्तुत्यर्था ॥ ११० ॥

११०. इस प्रकार मुनियों ने आचार से ही धर्म की गति को देखकर सारे तप का परम मूल आचार को ही ग्रहण किया।

इदानीं शिष्यस्य सुखप्रतिपत्तये वक्ष्यमाणार्थानुक्रमणिकामाह—

**जगतश्च समुत्पत्तिं संस्कारविधिमेव च।**
**व्रतचर्योपचारं च स्नानस्य च परं विधिम् ॥ १११ ॥**

जगतश्च समुत्पत्तिमिति ॥ 'पाषण्डगणधर्मांश्च' (१।११८) इत्यन्तं जगदुत्पत्तिसंकीर्तनम्। ब्राह्मणस्तुतिश्च धर्मरक्षार्थत्वेन। ब्राह्मणस्य शास्त्रस्तुत्यादिकं च सृष्टावेवान्तर्भवति। एतत्प्रथमाध्यायप्रमेयम्। संस्काराणां जातकर्मादीनां विधिमनुष्ठानम्। ब्रह्मचारिणो व्रताचरणम्। उपचारं च गुर्वादीनामभिवादनोपासनादि। 'सर्वो ऽन्यो विभागैककृद्गतिः' (श्लो. प. ३६) श्लोकषट्कावः। एतद्द्वितीयाध्यायप्रमेयम्। स्नानं गुरुकुलान्निवर्तमानस्य संस्कारविशेषस्तस्य प्रकृष्टं विधानम् ॥ १११ ॥

१११. टिप्पणी—११८ श्लोक के चतुर्थ चरण में है—'पाषण्डगण-

कृतवान्मनुः—इस शास्त्र में मनु ने कहा। क्या क्या कहा यह १११ से ११८ तक परिगणित किया है।

जगत् की उत्पत्ति को, संस्कारविधि को, व्रतचर्या के नियमों को और स्नान की श्रेष्ठ विधि को—

**दाराधिगमनं चैव विवाहानां च लक्षणम् ।**

**महायज्ञविधानं च श्राद्धकल्पं च शाश्वतम् ॥ ११२ ॥**

दाराधिगमनमिति ॥ दाराधिगमनं विवाहः, तद्विशेषाणां ब्राह्मादीनां च लक्षणम् । महायज्ञाः पञ्च वैश्वदेवादयः । श्राद्धस्य विधिः शाश्वतः प्रतिसर्गमनादिप्रवाहप्रवृत्त्या नित्यः । एष तृतीयाध्यायार्थः ॥ ११२ ॥

११२. विवाह को, विवाहों के लक्षण को, महान् यज्ञों के विधान को और शाश्वत श्राद्धनियम को—

**वृत्तीनां लक्षणं चैव स्नातकस्य व्रतानि च ।**

**भक्ष्याभक्ष्यं च शौचं च द्रव्याणां शुद्धिमेव च ॥ ११३॥**

वृत्तीनामिति ॥ वृत्तीनां जीवनोपायानां ऋतादीनां लक्षणम् । स्नातकस्य गृहस्थस्य व्रतानि नियमाः । एतच्चतुर्थाध्यायप्रमेयम् । भक्ष्यं दध्यादि, अभक्ष्यं लशुनादि । शौचं मरणादौ ब्राह्मणादेर्दशाहादिना । द्रव्याणां शुद्धिरुदकादिना ॥ ११३ ॥

११३. वृत्तियों (आजीविका प्रकारों) के लक्षण को, स्नातक के व्रतों को, भक्ष्य और अभक्ष्य को, शौच (सफाई) को, और द्रव्यों की शुद्धि को—

**स्त्रीधर्मयोगं तापस्यं मोक्षं संन्यासमेव च ।**

**राज्ञश्च धर्ममखिलं कार्याणां च विनिर्णयम् ॥ ११४ ॥**

स्त्रीधर्मयोगमिति ॥ स्त्रीणां धर्मयोगं धर्मोपायं एतत्पञ्चमाध्यायिकम् । तापस्यं तपसे वानप्रस्थाय हितं तस्य धर्मम् । मोक्षहेतुत्वान्मोक्षं यतिधर्मम् । संन्-

---

१११. व्रतचर्या—कु० ब्रह्मचारिणो व्रताचरणम् । स्नानम्—कु० गुरुकुलान्निवर्तमानस्य संस्कारविशेषः । (अनेन दीक्षान्तस्नानेनैव स स्नातक इति कथ्यते)

धर्मत्वेऽपि संन्यासस्य पृथगुपदेशः । प्राधान्यज्ञापनार्थः । एष षष्ठाध्यायार्थः । राज्ञोऽभिषिक्तस्य सर्वो दृष्टादृष्टार्थो धर्मः । एष सप्तमाध्यायार्थः । कार्याणामृणादीनामर्थिप्रत्यर्थिसमर्पितानां विनिर्णयो विचार्य तत्त्वनिर्णयः ॥ ११४ ॥

११४. स्त्रियों के धर्मोपाय को, तपस्वियों के [ नियम ] को, मोक्ष और संन्यास को, राजा के संपूर्ण धर्म को और कार्यों के ठीक-ठीक निर्णय को—

**साक्षिप्रश्नविधानं च धर्मं स्त्रीपुंसयोरपि ।**
**विभागधर्मं द्यूतं च कण्टकानां च शोधनम् ॥ ११५ ॥**

साक्षीति ॥ साक्षिणां च प्रश्ने सद्विधानम् । व्यवहाराङ्गत्वेऽपि साक्षिप्रश्नस्य विधाननिर्णयोपायत्वात्पृथङ्निर्देशः । एतदाष्टमिकम् । स्त्रीपुंसयोर्भार्यापत्योः संनिधानासंनिधौ च धर्मानुष्ठानं, ऋक्थविभागस्य च धर्मम् । यद्यपि ऋक्थ-भागोऽपि 'कार्याणां च विनिर्णयम्' (१।११४) इत्यनेनैव प्राप्तस्तथाप्यध्याय-भेदात्पृथङ्निर्देशः । द्यूतविषयो विधिर्द्यूतशब्देनोच्यते । कण्टकानां चौरादीनां शोधनं निरसनम् ॥ ११५ ॥

११५. साक्षियों से प्रश्नों के नियम को, स्त्री तथा पुरुषों के धर्म को [ दाय ] विभाग के धर्म को, द्यूत को, कण्टकों (दुष्ट चोर आदि) के शोधन (नष्ट करने, हटाने) को—

**वैश्यशूद्रोपचारं च संकीर्णानां च संभवम् ।**
**आपद्धर्मं च वर्णानां प्रायश्चित्तविधिं तथा ॥ ११६ ॥**

वैश्यशूद्रोपचारं चेति ॥ वैश्यशूद्रोपचारं स्वधर्मानुष्ठानम् । एतन्नवमे । एवं संकीर्णानां अनुलोमप्रतिलोमजातानामुत्पत्तिं, आपदि च जीविकोपदेशं आपद्धर्मम् । एतद्दशमे । प्रायश्चित्तविधिमेकादशे ॥ ११६ ॥

११६. वैश्यों और शूद्र के व्यवहार (नियम) को, मिश्रित जातियों की उत्पत्ति को, वर्णों के आपद्धर्म को तथा प्रायश्चित्त की विधि को—

**संसारगमनं चैव त्रिविधं कर्मसंभवम् ।**
**निःश्रेयसं कर्मणां च गुणदोषपरीक्षणम् ॥ ११७ ॥**

संसारगमनमिति ॥ संसारगमनं देहान्तरप्राप्तिरूपं उत्तममध्यमाधमभेदेन त्रिविधं शुभाशुभकर्महेतुकम् । निःश्रेयसमात्मज्ञानं सर्वोत्कृष्टमोक्षलक्षणस्य श्रेयसो हेतुत्वात् । कर्मणां च विहितनिषिद्धानां गुणदोषपरीक्षणम् ॥११७॥

११७. तीन प्रकार के कर्मों से होने वाले संसार-गमन (देहान्तरप्राप्ति) को निःश्रेयस (परमकल्याण, मोक्ष) को और कर्मों की गुण-दोष-परीक्षा को—

**देशधर्माञ्जातिधर्मान्कुलधर्मांश्च शाश्वतान् ।**
**पाषण्डगणधर्मांश्च शास्त्रेऽस्मिन्नुक्तवान्मनुः ॥ ११८ ॥**

देशधर्मानिति ॥ प्रतिनियतदेशेऽनुष्ठीयमाना देशधर्माः, ब्राह्मणादिजातिनियता जातिधर्माः, कुलविशेषाश्रया कुलधर्माः, वेदबाह्यागमसमाश्रया प्रतिषिद्धव्रतचर्या पाषण्डं, तद्योगात्पुरुषोऽपि पाषण्डः, तन्निमित्ता ये धर्माः 'पाषण्डिनो विकर्मस्थान्' (४।३०) इत्यादयः, तेषां पृथग्धर्माभिधानात् । गणः समूहो वणिगादीनाम् ॥ ११८ ॥

११८. शाश्वत देशधर्मों और जातिधर्मों और कुलधर्मों और पाषण्डों (वेद से भिन्न मतों) के धर्मों को इस शास्त्र में मनु ने कहा ।

**यथेदमुक्तवाञ्छास्त्रं पुरा पृष्टो मनुर्मया ।**
**तथेदं यूयमप्यद्य मत्सकाशान्निबोधत ॥ ११९॥**

इति मानवे धर्मशास्त्रे भृगुप्रोक्तायां संहितायां प्रथमोऽध्यायः ॥ १ ॥

यथेदमिति ॥ पूर्वं मया पृष्टो मनुर्यथेदं शास्त्रमभिहितवांस्तथैवान्यूनातिरिक्तं मत्सकाशाच्छृणुतेति ऋषीणां श्रद्धातिशयार्थं पुनरभिधानम् ॥ ११९ ॥

इति श्रीकुल्लूकभट्टकृतायां मन्वर्थमुक्तावल्यां मनुवृत्तौ प्रथमोऽध्यायः ॥ १ ॥

११९. मेरे द्वारा पहले पूछे गए मनु ने जैसे इस शास्त्र को कहा—वैसे (उस प्रकार, उसी क्रम से) तुम भी आज मेरे पास से जानो ।

इत्याचार्यरामदेवात्मजगजाननभूषणवैदिककृतायां विद्याधरीनामाख्यायां हिन्दी-संस्कृतव्याख्यायां मनुवृत्तौ प्रथमोऽध्यायः ॥ १ ॥

यथा च छान्दोग्ये (८।२।१)—'स यदि पितृलोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्ति' इत्यादि ॥ ५ ॥

५. उन (कामों—इच्छाओं) में भली-भाँति वर्तमान [मनुष्य] अमर-लोकता (ब्रह्मभाव—मृत्युरहित स्थिति) को प्राप्त होता है और यहाँ (इस संसार में) यथासंकल्पित (जिस रूप में भी अभिलषित) सब कामों को प्राप्त करता है, अर्थात् उसकी सब इच्छाएँ पूरी हो जाती हैं।

इदानीं धर्मप्रमाणान्याह—

**वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्।**
**आचारश्चैव साधूनामात्मनस्तुष्टिरेव च ॥ ६ ॥**

वेदोऽखिलो धर्ममूलमिति ॥ वेदः ऋग्यजुःसामाथर्वलक्षणः, स सर्वो विध्यर्थवादमन्त्रात्मा धर्मे मूलं प्रमाणम्। अर्थवादानामपि विध्येकवाक्यतया स्तावकत्वेन धर्मे प्रामाण्यात्। यदाह जैमिनिः (जै. सू. १।२।७)—'विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः'। मन्त्रार्थवादानामपि विधिवाक्यैक-वाक्यतयैव धर्मे प्रामाण्यं, प्रयोगकाले चानुष्ठेयस्मारकत्वं वेदस्य च धर्मे प्रामाण्यं यथानुभवकरणत्वकल्पं न्यायसिद्धम्। स्मृत्यादीनामपि तन्मूलत्वेनैव प्रामाण्यप्रतिपादनार्थमनूद्यते। मन्वादीनां च वेदविदां स्मृतिर्धर्मे प्रमाणम्। वेदविदामिति विशेषणोपादानाद्वेदमूलत्वेनैव स्मृत्यादीनां प्रामाण्यमभिमतम्। शीलं ब्रह्मण्यतादिरूपम्। यदाह हारीतः—'ब्रह्मण्यता देवपितृभक्तता सौम्यता अपरोपतापिता अनसूयता मृदुता अपारुष्यं मैत्रता प्रियवादित्वं कृतज्ञता शरण्यता कारुण्यं प्रशान्तिश्चेति त्रयोदशविधं शीलम्'। गोविन्दराजस्तु शीलं रागद्वेषपरित्याग इत्याह। आचारः कम्बलवल्कलाद्याचरणरूपः, साधूनां धार्मिकाणां आत्मतुष्टिश्च वैकल्पिकपदार्थविषया धर्मे प्रमाणम्। यदाह गर्गः—'वैकल्पिके आत्मतुष्टिः प्रमाणम्' ॥ ६ ॥

६. अखिल वेद धर्म का मूल है, तथा वेद को जानने वालों की स्मृति और शील (आचार), साधुओं का आचार और आत्मा की तुष्टि [धर्ममूल है]—भाव यह है कि मुख्य धर्ममूल वेद है, उसके बाद स्मृति आदि भी धर्ममूल हैं।

वेदादन्येषां वेदमूलत्वेन प्रामाण्येऽभिहितेऽपि मनुस्मृतेः सर्वोत्कर्षज्ञापनाय विशेषेण वेदमूलतामाह—

**यः कश्चित्कस्यचिद्धर्मो मनुना परिकीर्तितः ।**
**स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः ॥ ७ ॥**

यः कश्चिदिति ॥ यः कश्चित्कस्यचिद् ब्राह्मणादेर्मनुना धर्म उक्तः स सर्वो वेदे प्रतिपादितः । यस्मात्सर्वज्ञोऽसौ मनुः सर्वज्ञतया चोत्सन्नविप्रकीर्णपठ्यमानवेदार्थं सम्यग्ज्ञात्वा लोकहितायोपनिबद्धवान् । गोविन्दराजस्तु 'सर्वज्ञानमयः' इत्यस्य सर्वज्ञानात्मक इव वेद इति वेदविशेषणतामाह ॥ ७ ॥

७. जो कोई किसी का धर्म मनु द्वारा कहा गया है, वह सब वेद में कहा गया है क्योंकि वह (मनु) सर्वज्ञानमय [था या है]।

**सर्वं तु समवेक्ष्येदं निखिलं ज्ञानचक्षुषा ।**
**श्रुतिप्रामाण्यतो विद्वान्स्वधर्मे निविशेत वै ॥ ८ ॥**

सर्वं त्विति ॥ सर्वं शास्त्रजातं वेदार्थावगमोचितं ज्ञानं मीमांसाव्याकरणादिकं ज्ञानमेव चक्षुस्तेन निखिलं तद्विशेषेण पर्यालोच्य वेदप्रामाण्येनानुष्ठेयमवगम्य स्वधर्मेऽवतिष्ठेत ॥ ८ ॥

८. विद्वान् ज्ञानचक्षु से सब-कुछ पूरी तरह से सम्यक्तया समीपता से देखकर श्रुति (वेद) के प्रामाण्य से (उसे प्रमाण मानकर) अपने धर्म में पूरी तरह टिका रहे (स्थिर रहे)।

**श्रुतिस्मृत्युदितं धर्ममनुतिष्ठन्हि मानवः ।**
**इह कीर्तिमवाप्नोति प्रेत्य चानुत्तमं सुखम् ॥ ९ ॥**

श्रुतिस्मृत्युदितमिति ॥ श्रुतिस्मृत्युदितं धर्ममनुतिष्ठन्मानव इहलोके धार्मिकत्वेनानुषङ्गिणीं कीर्तिं परलोके च धर्मफलमुत्कृष्टं स्वर्गापवर्गादिसुखरूपं प्राप्नोति । अनेन वास्तवगुणकथनेन श्रुतिस्मृत्युदितं धर्ममनुतिष्ठेदिति विधिः कल्प्यते ॥ ९ ॥

---

६. आत्मतुष्टिः—यथात्मा संतुष्टः स्यात्—
'सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः'
—कालिदासः (अभिज्ञानशाकुन्तलम्)

९. श्रुति तथा स्मृति में कहे गए धर्म को अनुष्ठित करता हुआ मानव यहाँ (इस संसार में) कीर्ति को प्राप्त करता है और मृत्यु के पश्चात् अनुत्तम (सर्वातिशायी) सुख को।

**श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः ।**
**ते सर्वार्थेष्वमीमांस्ये ताभ्यां धर्मो हि निर्बभौ ॥ १० ॥**

श्रुतिस्त्विति ॥ लोकप्रसिद्धसंज्ञासंज्ञिसम्बन्धानुवादोऽयं श्रुतिस्मृत्योः प्रतिकूलतर्कणामीमांस्यत्वविधानार्थं, स्मृतेः श्रुतितुल्यत्वबोधनेनाचारादिभ्यो बलवत्त्वप्रतिपादनार्थं च। तेन स्मृतिविरुद्धाचारो हेय इत्यस्य फलम्। श्रुतिर्वेदः, मन्वादिशास्त्रं स्मृतिः, ते उभे प्रतिकूलतर्केण विचारयितव्ये, यतस्ताभ्यां निःशेषेण धर्मो बभौ प्रकाशतां गतः ॥ १० ॥

१०. श्रुति वेद जाना जाना चाहिए, धर्मशास्त्र स्मृति (जाना जाना चाहिए), सब अर्थों (मामलों) में ये दोनों (श्रुति और स्मृति) अमीमांस्य (मीमांसा न करने योग्य, तर्क से ऊहापोह या विचार न करने योग्य, श्रद्धा करने योग्य), हैं क्योंकि इन दोनों से धर्म पूरी तरह से प्रकाशित हुआ।

**योऽवमन्येत ते मूले हेतुशास्त्राश्रयाद् द्विजः ।**
**स साधुभिर्बहिष्कार्यो नास्तिको वेदनिन्दकः ॥ ११ ॥**

योऽवमन्येतेति ॥ ते पुनस्ते द्वे श्रुतिस्मृती द्विजोऽवमन्येत स शिष्टैर्द्विजानुष्ठेयाध्ययनादिकर्मणो निःसार्यः। पूर्वश्लोके सामान्येनामीमांस्ये इति मीमांसानिषेधादनुकूलमीमांसापि न प्रवर्तनीयेति भ्रमो मा भूदिति विशेषयति—'हेतुशास्त्राश्रयात्'। वेदवाक्यमप्रमाणं वाक्यत्वात् विप्रलम्भकवाक्यवदित्यादिप्रतिकूलतर्कावष्टम्भेन चार्वाकादिनास्तिक इव नास्तिकः। यतो वेदनिन्दकः ॥ ११ ॥

११. जो द्विज हेतुशास्त्र (न्यायशास्त्र, तर्कशास्त्र) के आश्रय से इन [धर्म के] मूलों को अवमानित करे, वह वेदनिन्दक नास्तिक साधुओं से बहिष्कार के योग्य है।

---

अनुत्तमम्—न विद्यते उत्तमं यस्मात् तद् अनुत्तमम्।
निरुक्तटीकाकारो दुर्गाचार्यः—श्रुतिस्मृत्युदितमांना भूत्वा—निरुक्तम् १.२७
१०. 'तु' अत्र निरर्थक पादपूरणार्थ ....

इदानीं शीलस्याचार एवान्तर्भावविवक्षयाह्वैदमूलत्वेन तत्त्वं न स्मृतिशीला-दिप्रकारान्तरम् इति दर्शयितुं चतुर्धा धर्मप्रमाणमाह—

**वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।**

**एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम् ॥ १२ ॥**

वेद इति ॥ वेदो धर्मप्रमाणं, स क्वचित्प्रत्यक्षः क्वचित्स्मृत्यनुमित इत्येवं तात्पर्यं न तु प्रमाणपरिगणने । अत एव 'श्रुतिस्मृत्युदितं धर्मं' (२।९) इत्यत्र द्वयमेवाभिहितवान् । सदाचारः शिष्टाचारः । स्वस्य चात्मनः प्रियमात्मतुष्टिः ॥ १२ ॥

१२. वेद, स्मृति, सत् लोगों का आचार और अपनी आत्मा का प्रिय—इस चतुर्विध को साक्षात् धर्म का लक्षण कहते हैं ।

**अर्थकामेष्वसक्तानां धर्मज्ञानं विधीयते ।**

**धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः ॥ १३ ॥**

अर्थकामेष्विति ॥ अर्थकामेष्वसक्तानामर्थकामलिप्साशून्यानां धर्मोपदेशोऽयम् । ये त्वर्थकामसमीहया लोकप्रतिपत्त्यर्थं धर्ममनुतिष्ठन्ति न तेषां कर्मफलमित्यर्थः । धर्मं च ज्ञातुमिच्छतां प्रकृष्टं प्रमाणं श्रुतिः । प्रकर्षबोधनेन च श्रुतिस्मृतिविरोधे स्मृत्यर्थो नादरणीय इति भावः । अत एव जाबालः—'श्रुतिस्मृतिविरोधे तु श्रुतिरेव गरीयसी, । अविरोधे सदा कार्यं स्मार्तं वैदिकवत्सता ॥' भविष्यपुराणेऽप्युक्तम्—'श्रुत्या सह विरोधे तु बाध्यते विषयं विना' । जैमिनिरप्याह (जै. न्या. सू. १।३।३)—'विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्' श्रुतिविरोधे स्मृतिवाक्यमनपेक्ष्यमप्रमाणमनादरणीयम् । असति विरोधे मूलवेदानुमानमित्यर्थः ॥ १३ ॥

१३. अर्थों और कामों में अनासक्त (व्यक्तियों) के लिए धर्मज्ञान विहित किया जाता है (धर्म-ज्ञान का विधान किया जाता है)—धर्म को जानने की इच्छा जानने वालों के लिए श्रुति परम प्रमाण है ।

---

१२. 'वेद' इत्यस्य व्याख्यार्थं दृश्यताम्—मनु० १. स्वस्य च प्रियमात्मनः—दृश्यताम्—मनु० २.६



**श्रुतिद्वैधं तु यत्र स्यात्तत्र धर्मावुभौ स्मृतौ ।**
**उभावपि हि तौ धर्मौ सम्यगुक्तौ मनीषिभिः ॥ १४ ॥**

श्रुतिद्वैधं त्विति ॥ यत्र पुनः श्रुत्योरेव द्वैधं परस्परविरुद्धार्थप्रतिपादनं तत्र द्वावपि धर्मौ मनुना स्मृतौ । तुल्यबलतया विकल्पानुष्ठानविधानेन च विरोधाभावः । यस्मान्मन्वादिभ्यः पूर्वतरैरपि विद्वद्भिः सम्यक् समीचीनौ द्वावपि तौ धर्मावुक्तौ । समानन्यायतया स्मृत्योरपि विरोधे विकल्प इति प्रकृतोपयोगः तुल्यबलत्वाविशेषात् । तथाह गौतमः—'तुल्यबलविरोधे विकल्पः' ॥१४॥

१४. जहाँ श्रुतिद्वैध (परस्पर विरोधी अर्थ को कहने वाले दो वेदवाक्य) हों वहाँ दोनों ही धर्म स्मृत हैं (कहे गए हैं)—मनीषियों द्वारा वे दोनों ही ठीक धर्म कहे गए हैं।

अत्र दृष्टान्तमाह—



**उदितेऽनुदिते चैव समयाध्युषिते तथा ।**
**सर्वथा वर्तते यज्ञ इतीयं वैदिकी श्रुतिः ॥ १५ ॥**

उदितेऽनुदिते चैवेति ॥ सूर्यनक्षत्रवर्जितः कालः 'समयाध्युषित' शब्देनोच्यते । उदयात्पूर्वं प्रभाकिरणवान्प्रविरलतारकोऽनुदितकालः । परस्परविरुद्धकालत्रयेऽपि सर्वथा विकल्पेनाग्निहोत्रहोमः प्रवर्तते । देवतोद्देशेन द्रव्यत्यागगुणयोगात् 'यज्ञ'शब्दोऽत्र गौणः । 'उदिते होतव्यम्' इत्यादिका वैदिकी श्रुतिः ॥ १५ ॥

१५. [सूर्य के] उदित होने पर, अनुदित होने पर, तथा सूर्य नक्षत्र-वर्जित काल में यज्ञ सर्वथा है (किया जाना चाहिए)—इस प्रकार यह वैदिक श्रुति है—तात्पर्य यह है कि वेदों में ये सब वचन मिलते हैं—सभी ठीक हैं।

**निषेकादिश्मशानान्तो मन्त्रैर्यस्योदितो विधिः ।**
**तस्य शास्त्रेऽधिकारोऽस्मिन्ज्ञेयो नान्यस्य कस्यचित् ॥१६॥**

---

१५. वस्तुतो विभिन्नप्रकरणेषु विभिन्नदृष्टिकोणैर्मनीषिभिः कथ्यते, तत्र तत्र प्रकरणवशात् तस्यास्तस्याः श्रुतेः ग्राह्यत्वं भवति, यथाभिहितं निरुक्ते (१३.१) मन्त्रविषये—'न तु पृथक्त्वेन मन्त्रा निर्वक्तव्याः प्रकरणश एव तु निर्वक्तव्याः' इति

निषेकादीति ॥ गर्भाधानादिरन्त्येष्टिपर्यन्तो यस्य वर्णस्य मन्त्रैरनुष्ठान-कलाप उक्तो द्विजातेरित्यर्थः । तस्यास्मिन्मानवधर्मशास्त्रेऽध्ययने श्रवणेऽधि-कारः, न त्वन्यस्य कस्यचिच्छूद्रादेः । एतच्छास्त्रस्यानुष्ठानं च द्विजाधिकारं सर्वै-रेव कर्तव्यं, प्रवचनं त्वन्याध्यापनं व्याख्यानरूपं ब्राह्मणकर्तृकमेवेति 'विदुषा ब्राह्मणेन' (१।१०३) इत्यत्र व्याख्यातम् ॥ १६ ॥

१६. गर्भाधान से लेकर अन्त्येष्टि तक जिसका अनुष्ठान-कलाप मन्त्रों से उदित (कथित) हो (अर्थात्, मन्त्रोच्चारण के साथ जिसके १६ संस्कार हुए हों), उसका ही इस शास्त्र में अधिकार माना जाना चाहिए, किसी अन्य का नहीं ।

धर्मस्य स्वरूपं प्रमाणं परिभाषां चोक्त्वा इदानीं धर्मानुष्ठानयोग्यदेशा-नाह—

**सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम् ।**
**तं देवनिर्मितं देशं ब्रह्मावर्तं प्रचक्षते ॥ १७ ॥**

सरस्वतीति ॥ सरस्वतीदृषद्वत्योर्नद्योरुभयोर्मध्यं ब्रह्मावर्तं देशमाहुः । देवनदी-देवनिर्मितशब्दौ नदीदेशप्रशंसार्थौ ॥ १७ ॥

१७. देवनदियों, सरस्वती तथा दृषद्वती, का जो मध्यस्थान है उस देव-द्वारा निर्मित देश को ब्रह्मावर्त कहते हैं ।

**तस्मिन्देशे य आचारः पारंपर्यक्रमागतः ।**
**वर्णानां सान्तरालानां स सदाचार उच्यते ॥ १८ ॥**

तस्मिन्देश इति ॥ तस्मिन्देशे प्रायेण शिष्टानां सम्भवात्तेषां ब्राह्मणादि-वर्णानां संकीर्णजातिपर्यन्तानां य आचारः पारंपर्यक्रमागतो न त्विदानींतनः स सदाचारोऽभिधीयते ॥ १८ ॥

१८. उस देश में परम्परागत क्रम से आया हुआ जो आचार है, मिश्रित जाति सहित वर्णों का (के लिए), वह सदाचार कहलाता है ।

**कुरुक्षेत्रं च मत्स्याश्च पञ्चालाः शूरसेनकाः ।**
**एष ब्रह्मर्षिदेशो वै ब्रह्मावर्तादनन्तरः ॥ १९ ॥**

कुरुक्षेत्रमिति ॥ मत्स्यादिशब्दा बहुवचनान्ता एव देशविशेषवाचकाः । पञ्चालाः कान्यकुब्जदेशाः । शूरसेनका मथुरादेशाः । एष ब्रह्मर्षिदेशो ब्रह्मावर्तात्किंचिदूनः ॥ १९ ॥

१९. कुरुक्षेत्र, मत्स्यदेश, पञ्चाल देश, शूरसेनक देश—ब्रह्मावर्त के अनन्तर (उस से कुछ ही कम) कम यह ब्रह्मर्षि देश है अर्थात् कुरुक्षेत्रादि चार देश मिलकर ब्रह्मर्षि देश कहलाते हैं इनका महत्त्व ब्रह्मावर्त से कुछ ही कम है।

**एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ।**
**स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ॥ २० ॥**

एतद्देश इति ॥ कुरुक्षेत्रादिदेशजातस्य ब्राह्मणस्य सकाशात्सर्वमनुष्या आत्मीयमात्मीयमाचारं शिक्षेरन् ॥ २० ॥

२०. इस देश में पैदा हुए हुए ब्राह्मण के पास से पृथ्वी पर सब मानव अपने-अपने चरित्र को शिक्षित करें।

**हिमवद्विन्ध्ययोर्मध्यं यत्प्राग्विनशनादपि ।**
**प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्तितः ॥ २१ ॥**

हिमवदिति ॥ उत्तरदक्षिणदिगवस्थितौ हिमवद्विन्ध्यौ पर्वतौ तयोर्मध्यं विनशनात् सरस्वत्यन्तर्धानदेशाद्यत्पूर्वं प्रयागाच्च यत्पश्चिमं स मध्यदेशनामा देशः कथितः ॥ २१ ॥

२१. हिमालय और विन्ध्य के मध्य में, [सरस्वती के] अन्तर्धान [देश] के पूर्व में, प्रयाग के पश्चिम में मध्यदेश कहा गया है।

---

२०. 'सकाशात्' इत्यत्र पञ्चम्यर्थोऽपि सप्तम्यर्थेन कथितः । मानवाः इत्येव मया ('मा' शब्दस्य तृतीयैकवचने) लक्ष्म्या नवा नूतना अर्थात् लक्ष्मीशालिनो जना । किञ्चदपि धनं प्राप्नुवन्तु ते, भौतिकोन्नतिमाप्नुवन्तु ते; चरित्रशिक्षाया सर्वेषामावश्यकता भविष्यति । 'पृथिवी' शब्दस्य प्रयोगो विश्वव्यापकत्वस्य ज्ञापनार्थम् ।

शिक्षेरन्—शिक्षितं कुर्वन्तु अथवा [शक् धातोः] समर्थं कुर्वन्तु ।

अग्रजन्मा—ब्रह्मणोऽग्रभागान्मुखाज्जन्म यस्य सः । अथवा अग्रक्रमेण मुख्यत्वेन जन्म यस्य सः । अथवा अग्रे गमनाय नेतृत्वाय जन्म यस्य सः ।

**आ समुद्रात्तु वै पूर्वादा समुद्राच्च पश्चिमात् ।**
**तयोरेवान्तरं गिर्योरार्यावर्तं विदुर्बुधाः ॥ २२ ॥**

आ समुद्रात्त्विति ॥ आ पूर्वसमुद्रात् आ पश्चिमसमुद्राद्धिमवद्विन्ध्ययोश्च मध्यं तमार्यावर्तदेशं पण्डिता जानन्ति । मर्यादायामयमाङ् नाभिविधौ । तेन समुद्रमध्यद्वीपानां नार्यावर्तता । आर्या अत्रावर्तन्ते पुनःपुनरुद्भवन्तीत्यार्यावर्तः ॥ २२ ॥

२२. उन दोनों (हिमालय तथा विन्ध्य) पर्वतों का मध्य-स्थान जोकि पूर्वसमुद्र तक तथा पश्चिम समुद्र तक [ फैला हुआ ] है, विद्वान् लोग [उसे] आर्यावर्त [नाम से] जानते हैं । 'तु' अत्र निरर्थकः बल० तु...

**कृष्णसारस्तु चरति मृगो यत्र स्वभावतः ।**
**स ज्ञेयो यज्ञियो देशो म्लेच्छदेशस्त्वतः परः ॥ २३ ॥**

कृष्णसारस्त्विति ॥ कृष्णसारो मृगो यत्र स्वभावतो वसति न तु बलादानीतः, स यज्ञार्हो देशो ज्ञातव्यः । अन्यो म्लेच्छदेशो, न यज्ञार्ह इत्यर्थः ॥ २३ ॥

२३. जहाँ कृष्णसार मृग स्वभावतः घूमता है, वह यज्ञार्ह देश जाना जाना चाहिए; इससे परे म्लेच्छ देश [ है ] ।

**एतान्द्विजातयो देशान्संश्रयेरन्प्रयत्नतः ।**
**शूद्रस्तु यस्मिन्कस्मिन्वा निवसेद्वृत्तिकर्शितः ॥ २४ ॥**

एतानिति ॥ अन्यदेशोद्भवा अपि द्विजातयो यज्ञार्थत्वाददृष्टार्थत्वाच्च तान्देशान्प्रयत्नादाश्रयेरन् । शूद्रस्तु वृत्तिपीडितो वृत्त्यर्थमन्यदेशमप्याश्रयेत् ॥२४॥

२४. द्विजलोग प्रयत्न से इन देशों का (ब्रह्मावर्त आदि का) आश्रय लें, शूद्र आजीविका से पीड़ित हुआ जिस किसी [ देश ] में भी रह सकता है ।

**एषा धर्मस्य वो योनिः समासेन प्रकीर्तिता ।**
**संभवश्चास्य सर्वस्य वर्णधर्मान्निबोधत ॥ २५ ॥**

एषा धर्मस्येति ॥ एषा युष्माकं धर्मस्य योनिः संक्षेपेणोक्ता । योनिर्ज्ञप्तिकारणं 'वेदोऽखिलो धर्ममूलम्' (२।६) इत्यादिनोक्तमित्यर्थः । गोविन्दराजस्तु 'धर्म' शब्दोऽपूर्वाख्यात्मकधर्मे वर्तते इति 'विद्वद्भिः सेवितः' (२।१)

हेतुत्व तत्कारणेऽष्टकादौ चातुर्वर्ण्यस्य धर्मस्य योनिरिति व्याख्यातवान् । संभवश्चोत्पत्तिर्जगत इत्युक्ता । इदानीं वर्णधर्मान्शृणुत । वर्णधर्मशब्दश्च वर्णधर्माश्रमधर्मवर्णाश्रमधर्मगुणधर्मनैमित्तिकधर्माणामुपलक्षकः । ते च भविष्यपुराणोक्ताः—वर्णधर्मः स्मृतस्त्वेक आश्रमाणामतः परम् । वर्णाश्रमस्तृतीयस्तु गौणो नैमित्तिकस्तथा ॥ वर्णत्वमेकमाश्रित्य यो धर्मः संप्रवर्तते । वर्णधर्मः स उक्तस्तु यथोपनयनं नृप ॥ यस्त्वाश्रमं समाश्रित्य अधिकारः प्रवर्तते । स खल्वाश्रमधर्मस्तु भिक्षादण्डादिको यथा ॥ वर्णत्वमाश्रमत्वं च योऽधिकृत्य प्रवर्तते । स वर्णाश्रमधर्मस्तु मौञ्जीया मेखला यथा ॥ यो गुणेन प्रवर्तेत गुणधर्मः स उच्यते । यथा मूर्धाभिषिक्तस्य प्रजानां परिपालनम् ॥ निमित्तमेकमाश्रित्य यो धर्मः संप्रवर्तते । नैमित्तिकः स विज्ञेयः प्रायश्चित्तविधिर्यथा ॥ २५ ॥

२५. यह धर्म का स्रोत तथा इस जग [विश्व] की उत्पत्ति तुम्हारे लिए संक्षेप में कही है; [अब] वर्णों के धर्मों को जानो ।

**वैदिकैः कर्मभिः पुण्यैर्निषेकादिर्द्विजन्मनाम् ।**
**कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह च ॥ २६ ॥**

वैदिकैरिति ॥ वेदमूलत्वाद्वैदिकैः पुण्यैः शुभैर्मन्त्रप्रयोगादिकर्मभिः द्विजातीनां गर्भाधानादिशरीरसंस्कारः कर्तव्यः । पावनः पापक्षयहेतुः । प्रेत्य परलोके संस्कृतस्य यागादिफलसंबन्धात्, इहलोके च वेदाध्ययनाद्यधिकारात् ॥ २६ ॥

२६. द्विजातियों का वैदिक पुण्य कर्मों से गर्भाधान इत्यादि शरीरसंस्कार किया जाना चाहिए। यह संस्कार मर कर (परलोक में) और इस लोक में पवित्र करने वाला है ।

कुतः पापसंभवो येनैषां पापक्षयहेतुत्वमत आह—

**गार्भैर्होमैर्जातकर्मचौडमौञ्जीनिबन्धनैः ।**
**बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते ॥ २७ ॥**

गार्भैरिति ॥ ये गर्भशुद्धये क्रियन्ते ते गार्भाः । होमग्रहणमुपलक्षणम् । गर्भाधानादेरहोमकत्वात् । जातस्य यत्कर्म मन्त्रवत्सर्पिःप्राशनादिकं तज्जातकर्म । चौडं चूडाकरणकर्म । मौञ्जीनिबन्धनमुपनयनम् । एतैर्बैजिक प्रति-

२९. नाभि के छेदन से पूर्व मनुष्य का जातकर्म संस्कार किया जाता है और मन्त्रों से इसे स्वर्ण, मधु और घृत का प्राशन [ कराया जाता है ]।

नामधेयं दशम्यां तु द्वादश्यां वास्य कारयेत् ।
पुण्ये तिथौ मुहूर्ते वा नक्षत्रे वा गुणान्विते ॥ ३० ॥

नामधेयमिति ॥ 'जातकर्म' इति पूर्वश्लोके जन्मनः प्रस्तुतत्वाज्जन्मापेक्षयैव दशमे द्वादशे वाऽहनि अस्य शिशोर्नामधेयं स्वयमसम्भवेऽन्येन कारयेत् अथवा 'आशौचे च व्यतिक्रान्ते नामकर्म विधीयते' (शं. स्मृ. २।२) इति शङ्खवचनाद्दशमेऽहन्यतीते एकादशाह इति व्याख्येयम् । तथाप्यकरणे प्रशस्ते तिथौ प्रशस्त एव मुहूर्ते नक्षत्रे च गुणवत्येव ज्योतिषावगते कर्तव्यम् । वाशब्दोऽवधारणे ॥ ३० ॥

३०. पुण्य तिथि या मुहूर्त में या गुणों से युक्त नक्षत्र में, दशमी या द्वादशी [ तिथि ] को, इसका नामकरण करवायें ।

मङ्गल्यं ब्राह्मणस्य स्यात्क्षत्रियस्य बलान्वितम् ।
वैश्यस्य धनसंयुक्तं शूद्रस्य तु जुगुप्सितम् ॥ ३१ ॥

मङ्गल्यमिति ॥ ब्राह्मणादीनां यथाक्रमं मङ्गल-बल-धन-निन्दावाचकानि शुभ-बल-वसु-दीनादीनि नामानि कर्तव्यानि ॥ ३१ ॥

३१. ब्राह्मण का मङ्गल करने वाला (या मङ्गल से युक्त) क्षत्रिय का बल से युक्त, वैश्य का धन से युक्त, शूद्र का घृणा (या निन्दा) से युक्त [ नाम रखें ]।

इदानीमुपपदनियमार्थमाह—

शर्मवद्ब्राह्मणस्य स्याद्राज्ञो रक्षासमन्वितम् ।
वैश्यस्य पुष्टिसंयुक्तं शूद्रस्य प्रैष्यसंयुतम् ॥ ३२ ॥

शर्मवद्ब्राह्मणस्येति ॥ एषां यथाक्रमं शर्म-रक्षा-पुष्टि-प्रैष्यवाचिकानि कर्तव्यानि शर्म-वर्म-भूति-दासादीनि उपपदानि कार्याणि । उदाहरणानि तु—शुभशर्मा, बलवर्मा, वसुभूतिः, दीनदासः इति । तथा च यमः—'शर्म देवश्च

---

२९. नाभिवर्धनम्—नाभिच्छेदनम्
वर्धनम्—छेदनम् । √वृध् छेदपूर्त्योः । ल्युट् । 'पुंसः'—कु० पुरुषस्य, बलहूर—of a male child अस्माकं मतेन —मनुष्यस्य ।

विप्रस्य वर्म त्राता च भूभुजः । भूतिर्दत्तश्च वैश्यस्य दासः शूद्रस्य कारयेत् ॥' विष्णुपुराणेऽप्युक्तम्—'शर्मवद् ब्राह्मणस्योक्तं वर्मेति क्षत्रसंयुतम् । गुप्तदासात्मकं नाम प्रशस्तं वैश्यशूद्रयोः ॥ ३२ ॥

३२. ब्राह्मण का 'शर्मन्' वाला, राजा (क्षत्रिय) का रक्षा से युक्त, वैश्य का पुष्टि से युक्त, शूद्र का प्रैष्य से युक्त [नाम रखें]।

**स्त्रीणां सुखोद्यमक्रूरं विस्पष्टार्थं मनोहरम् ।**
**मङ्गल्यं दीर्घवर्णान्तमाशीर्वादाभिधानवत् ॥ ३३ ॥**

स्त्रीणामिति ॥ सुखोच्चार्यमक्रूरार्थवाचि व्यक्ताभिधेयं मनःप्रीतिजननं मङ्गल्यवाचि दीर्घस्वरान्तं आशीर्वचनेनाभिधानेन शब्देनोपेतं स्त्रीणां नाम कर्तव्यम् । यथा यशोदादेवीति ॥ ३३ ॥

३३. स्त्रियों का नाम सुख (सरलता) से बोलने योग्य, अक्रूर (क्रूरता, अमङ्गलता से रहित), अत्यन्त स्पष्ट अर्थ वाला, मन को हरने वाला, मङ्गल से युक्त (या मङ्गल करने वाला), दीर्घ स्वर हो अन्त में जिसके ऐसा, आशीर्वाद के अर्थ वाला [रखें]।

**चतुर्थे मासि कर्तव्यं शिशोर्निष्क्रमणं गृहात् ।**
**षष्ठेऽन्नप्राशनं मासि यद्वेष्टं मङ्गलं कुले ॥ ३४ ॥**

चतुर्थे मासीति ॥ चतुर्थे मासे बालस्य जन्मगृहान्निष्क्रमणमादित्यदर्शनार्थं कार्यम् । अन्नप्राशनं च षष्ठे मासे; अथवा कुलधर्मत्वेन यन्मङ्गलमिष्टं तत्कर्तव्यं, तेनोक्तकालादन्यकालेऽपि निष्क्रमणम् । तथा च यमः—'ततस्तृतीये कर्तव्यं मासि सूर्यस्य दर्शनम्' । सकलसंस्कारशेष(विषय)श्चायम् । तेन नाम्नो शर्मादिकमप्युपपद कुलाचारेण कर्तव्यम् ॥ ३४ ॥

३४. शिशु का चौथे मास में घर से निष्क्रमण (घर से बाहर ले जाना),

---

३२. शर्मन्—(प्रसन्नता, आनन्द, शान्ति) शर्मन्—(१) सुखे (२) शर्मणि । सुखात्मशुभम् । प्रेष्य—(सेवा, दीनता) । शर्मन् = √शॄ हिंसायाम् । मनिन् । प्रेष्य—प्र √ईष्—कर्मणि ण्यत्—प्रेरणीय-नियोज्य, दासः—अमरः ।

छठे मास में अन्नप्राशन करना चाहिए [इसके अतिरिक्त], जो मङ्गल (मङ्गल-कार्य) कुल में इष्ट हो [वह भी किया जा सकता है]।

**चूडाकर्म द्विजातीनां सर्वेषामेव धर्मतः।**
**प्रथमेऽब्दे तृतीये वा कर्तव्यं श्रुतिचोदनात् ॥ ३५ ॥**

चूडाकर्मेति ॥ चूडाकरणं प्रथमे वर्षे तृतीये वा द्विजातीनां धर्मतो धर्मार्थं कार्यम्, श्रुतिचोदनात्। 'यत्र बाणाः संपतन्ति कुमारा विशिखा इव' इति मन्त्रलिङ्गात्, कुलधर्मानुसारेणात्र व्यवस्थितविकल्पः। अत एव आश्वलायन-गृह्यम् (१।१७)—'तृतीये वर्षे चौलं यथाकुलधर्मं वा' ॥ ३५ ॥

३५. वेद के कथन के कारण धर्म के लिए सभी द्विजातियों का चूडाकर्म पहले या तीसरे वर्ष में करना चाहिए।

**गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम्।**
**गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः ॥ ३६ ॥**

गर्भाष्टम इति ॥ गर्भवर्षादष्टमे वर्षे ब्राह्मणस्योपनायनं कर्तव्यम्। उप-नयनमेवोपनायनम्। 'अन्येषामपि दृश्यते' (पा. ६।३।१३७) इति दीर्घः। गर्भैकादशे क्षत्रियस्य। गर्भद्वादशे वैश्यस्य ॥ ३६ ॥

३६. गर्भ से ८वें वर्ष में ब्राह्मण का, गर्भ से ११वें [वर्ष] में राजा (क्षत्रिय) का और गर्भ से १२वें [वर्ष] में वैश्य का उपनयन करना चाहिए।

**ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे।**
**राज्ञो बलार्थिनः षष्ठे वैश्यस्येहार्थिनोऽष्टमे ॥ ३७ ॥**

ब्रह्मवर्चसकामस्येति ॥ वेदाध्ययनतदर्थज्ञानादिप्रकर्षकृतं तेजो ब्रह्म-वर्चसं, तत्कामस्य ब्राह्मणस्य गर्भपञ्चमे वर्षे उपनयनं कार्यम्। क्षत्रियस्य हस्त्यश्वादिराज्यबलार्थिनो गर्भषष्ठे। वैश्यस्य बहुकृष्यादिचेष्टार्थिनो गर्भाष्टमे, गर्भवर्षाणामेव प्रकृतत्वात् ॥ यद्यपि बालस्य कामना न संभवति, तथापि तत्पितुरेव तद्गतफलकामना तस्मिन्नुपचर्यते ॥ ३७ ॥

३७. ब्रह्मवर्चस को चाहने वाले ब्राह्मण का [गर्भ से] ५वें में, बल को

---

३५. चौलम्–चौडम्

चाहने वाले क्षत्रिय का छठे में, ईहार्थी वैश्य का आठवें में [ उपनयन करना चाहिए ] ।

आ षोडशाद्ब्राह्मणस्य सावित्री नातिवर्तते ।
आ द्वाविंशात्क्षत्रबन्धोरा चतुर्विंशतेर्विशः ॥ ३८ ॥

आ षोडशादिति ॥ अभिविधावाङ् । ब्राह्मणक्षत्रियविशामुक्ताष्टमैका-दशद्वादशवर्षद्विगुणस्य विवक्षितत्वात् षोडशवर्षपर्यन्तं ब्राह्मणस्य सावित्र्यनु-वचनमुपनयनं नातिक्रान्तकालं भवति । क्षत्रियस्य द्वाविंशतिवर्षपर्यन्तम् । वैश्यस्य चतुर्विंशतिवर्षपर्यन्तम् । अत्र मर्यादायामाङ् । केचिद् व्याख्यापयन्ति यमवचनदर्शनात् । तथा च यमः—पतिता यस्य सावित्री दशवर्षाणि पञ्च च । ब्राह्मणस्य विशेषेण तथा राजन्यवैश्ययोः ॥ प्रायश्चित्तं भवेदेषां प्रोवाच वदतां वरः । विवस्वतः सुतः श्रीमान् यमो धर्मार्थतत्त्ववित् ॥ सशिखं वपनं कृत्वा व्रतं कुर्यात्समाहितः । हविष्यं भोजयेच्चैव ब्राह्मणान्सप्त पञ्च वा ॥ ३८ ॥

३८. १६वें [वर्ष तक] ब्राह्मण की, २२वें तक क्षत्रिय की, २४वें तक वैश्य की सावित्री अतिक्रान्तकाल नहीं होती, अर्थात् इस इस आयु तक इनका सावित्री के लिए उपनयन किया जा सकता है ।

अत ऊर्ध्वं त्रयोऽप्येते यथाकालमसंस्कृताः ।
सावित्रीपतिता व्रात्या भवन्त्यार्यविगर्हिताः ॥ ३९ ॥

---

३७. ईहार्थी—ईहेच्छुः बहुधनादिचेष्टार्थी वणिक्—who longs for (success in his) business.

ब्रह्मवर्चसम्—ब्रह्मणो वेदस्य तपसो वा वर्चस्तेजः । 'ब्रह्महस्तिभ्यां वर्चसः' ५.४.७८—इति अच् । ब्राह्मणस्य वृत्ताध्ययनर्द्धिः अमरः ।

भरतोऽमरकोषटीकायाम्—वेदबोधितस्याचारस्य परिपालनं वृत्तम् । व्रत-ग्रहणपूर्वकं गुरुमुखेन वेदाभ्यासोऽध्ययनम् । तयोर्वृद्धिस्तत्परिपालनकृत-तेजस उपचयो ब्रह्मवर्चसं स्यात् । "तपः स्वाध्यायजं तेजस्तु ब्रह्मवर्चसम्" (जटाधरः) ।

३८. उपनयनम्—अध्ययनार्थमाचार्यस्य उप समीपं नीयते येन कर्मणा । उप √नी—ल्युट् । ब्राह्मणक्षत्रियवैश्यानां यज्ञसूत्रधारणादिरूपप्रधानसंस्कारः ।

अत ऊर्ध्वमिति ॥ एते ब्राह्मणादयो यथाकालं यो यस्यानुकल्पिकोऽप्युपनयनकाल उक्तः षोडशवर्षादिपर्यन्तम्, तस्मात्कालादूर्ध्वं सावित्रीपतिता उपनयनहीनाः शिष्टगर्हिता व्रात्यसंज्ञा भवन्ति । संज्ञाप्रयोजनं च 'व्रात्यानां याजनं कृत्वा' (११।१९७) इत्यादिना व्यवहारसिद्धिः ॥ ३९ ॥

३९. इसके बाद में तीनों [जिनका] ठीक समय संस्कार नहीं हुआ है, सावित्री से पतित हुए हुए (उपनयनहीन), आर्य-निन्दित व्रात्य हो जाते हैं।

**नैतैरपूतैर्विधिवदापद्यपि हि कर्हिचित् ।**
**ब्राह्मान् यौनांश्च संबन्धानाचरेद् ब्राह्मणः सह ॥ ४० ॥**

नैतैरिति ॥ एतैरपूतैर्यथाविधिप्रायश्चित्तमकृतवद्भिः सह आपत्कालेऽपि कदाचिदध्यापनकन्यादानादीन्संबन्धान् ब्राह्मणो नानुतिष्ठेत् ॥ ४० ॥

४०. विधिपूर्वक पवित्र न हुए-हुओं (यथाविधि जिन्होंने प्रायश्चित्त नहीं किया है ऐसों) के साथ आपत्काल में भी कभी ब्राह्मण ब्राह्म और यौन सम्बन्ध न करे।

**कार्ष्णरौरवबास्तानि चर्माणि ब्रह्मचारिणः ।**
**वसीरन्नानुपूर्व्येण शाणक्षौमाविकानि च ॥ ४१ ॥**

कार्ष्णरौरवबास्तानीति ॥ कार्ष्णं इति विशेषानभिधानेऽपि मृगविशेषो रुरुसाहचर्यात् 'हारिणमैणेयं वा कार्ष्णं वा ब्राह्मणस्य' इत्यापस्तम्बवचनाच्च कृष्णमृगो गृह्यते । कृष्णमृगरुरुच्छागचर्माणि ब्रह्मचारिण उत्तरीयाणि वसीरन् । 'चर्माण्युत्तरीयाणि' इति गृह्यवचनात् । तथा शणक्षुमामेषलोमभवान्यधोवसनानि ब्राह्मणादयः क्रमेण परिदधीरन् ॥ ४१ ॥

---

३९. व्रात्यः—व्राते व्रात्यादि न इव अथवा व्रातात् समूहाच्च्यवति । यत् । दशसंस्काररहितः । अव्यवहार्यः । संस्कारहीन । जातिमात्रोपजीवी ।

४०. ब्राह्म—ब्रह्म (वेद, विद्या) संबन्धी । ब्राह्मसम्बन्धः—अध्यापनसंबन्धः; यौनसंबन्धः—विवाहसंबन्धः । अनुकूलक यौनान्—कन्यादानादीन् । आदि वचनेन कन्याग्रहणमपि । अथवा कन्यादानम्—इत्यत्रोभयविधोऽर्थः—१ कन्या-दानम्; २. कन्या-आदानम् ।

४१. क्रमशः (ब्राह्मण, क्षत्रिय, वैश्य) ब्रह्मचारी [उत्तरीय–उपरिवस्त्र-रूप में] कृष्णमृग, रुरुमृग तथा अज (बकरे) के चर्मों को [तथा अधोवस्त्ररूप में] सन, क्षुमा तथा ऊन के बने [वस्त्र] पहनें ।

**मौञ्जी त्रिवृत्समा श्लक्ष्णा कार्या विप्रस्य मेखला ।**
**क्षत्रियस्य तु मौर्वी ज्या वैश्यस्य शणतान्तवी ॥ ४२ ॥**

मौञ्जीति ॥ मुञ्जमयी त्रिगुणा समगुणत्रयनिर्मिता सुखस्पर्शा ब्राह्मणस्य मेखला कर्तव्या । क्षत्रियस्य मूर्वामयी ज्या धनुर्गुणरूपा मेखला । अतो ज्यात्वविनाशापत्तेस्त्रिवृत्त्वं नास्तीति मेधातिथि-गोविन्दराजौ । वैश्यस्य शणसूत्रमयी । अत्र त्रैगुण्यमनुवर्तत एव । 'त्रिगुणाः प्रदक्षिणा मेखलाः' इति सामान्येन प्रचेतसा त्रैगुण्याभिधानात् ॥ ४२ ॥

४२. विप्र की मेखला मूँज की बनी हुई तीन समान रस्सियों से बंटी हुई चिकनी बनायी जानी चाहिए। क्षत्रिय की मूर्वा से बनी ज्या (प्रत्यञ्चा) [मेखला बनायी जानी चाहिए], वैश्य की सन के तन्तुओं से बनी हुई...

**मुञ्जालाभे तु कर्तव्याः कुशाश्मन्तकबल्वजैः ।**
**त्रिवृता ग्रन्थिनैकेन त्रिभिः पञ्चभिरेव वा ॥ ४३ ॥**

मुञ्जालाभे त्विति ॥ कर्तव्या इति बहुवचननिर्देशाद् ब्रह्मचारित्रयस्य प्रकृतत्वान्मुञ्जालाभे त्रित्वापेक्षायाः समस्तानां कुशादीनां न त्रिगुणा विधाना-न्मुञ्जाद्यलाभ इति बोद्धव्यम् । कर्तव्या इति बहुवचनमुपलक्षणम् । भिन्नजाति-सम्बन्धित्वेति प्रदानस्य मेधातिथेरपि बहुवचनपाठः संमतः । मुञ्जाद्यभावे ब्राह्मणादीनां त्रयाणां यथाक्रमं कुशादिभिस्तृणविशेषैर्मेखलाः कार्याः । त्रिगुणेनैकग्रन्थिना युक्तास्त्रिभिर्वा पञ्चभिर्वा । अत्र तु वाशब्दनिर्देशाद् ग्रन्थीनां न विप्रादिभिः क्रमेण संबन्धः किन्तु सर्वत्र यथाकुलाचारं विकल्पः । ग्रन्थि-भेदश्चायं मुख्यामुख्यापेक्षासंभवाद् ग्रहीतव्यः ॥ ४३ ॥

---

४१. क्षुमा—सन (पटसन) का ही एक भेद ।

४२. 'त्रिवृत्समा' क्षत्रिय तथा वैश्य की मेखला के विशेषणरूप में भी आयेगा ।

४५. धर्म के अनुसार ब्राह्मण बिल्व या पलाश के बने हुए, क्षत्रिय वट या खदिर के बने हुए, वैश्य पीलु या उदुम्बर के बने हुए दंडों के (ग्रहण करने के) योग्य हैं (दंड ग्रहण करें)।

**केशान्तिको ब्राह्मणस्य दण्डः कार्यः प्रमाणतः ।**
**ललाटसंमितो राज्ञः स्यात् तु नासान्तिको विशः ॥ ४६ ॥**

केशान्तिक इति ॥ केशललाटनासिकापर्यन्तपरिमाणक्रमेण ब्राह्मणादीनां दण्डाः कर्तव्याः ॥ ४६ ॥

४६. परिमाण (माप) से ब्राह्मण का दंड बालों के सिरे तक, क्षत्रिय का माथे तक के माप का और वैश्य का नाक के अन्त (सिरे, नोक) तक होवे।

**ऋजवस्ते तु सर्वे स्युरव्रणाः सौम्यदर्शनाः ।**
**अनुद्वेगकरा नृणां सत्वचोऽनग्निदूषिताः ॥ ४७ ॥**

ऋजव इति ॥ ते दण्डा अव्रणा अक्षताः शोभनदर्शनाः सवल्कला अग्निदाहरहिता भवेयुः ॥ ४७ ॥

४७. वे सब दंड सीधे, अक्षत, सौम्यदर्शन (देखने में अच्छे लगने वाले, आह्लादक), लोगों को उद्विग्न (भय से चञ्चल) न करने वाले, त्वचा से युक्त तथा अग्नि से अदूषित हों।

न च तैः प्राणिजातमुद्वेजनीयमित्याह—

**प्रतिगृह्येप्सितं दण्डमुपस्थाय च भास्करम् ।**
**प्रदक्षिणं परीत्याग्निं चरेद्भैक्षं यथाविधि ॥ ४८ ॥**

प्रतिगृह्येप्सितमिति ॥ उक्तलक्षणं प्राप्तुमिष्टं दण्डं गृहीत्वा आदित्याभिमुखं स्थित्वाग्निं प्रदक्षिणीकृत्य यथाविधि भैक्षं याचेत् ॥ ४८ ॥

४८. इष्ट दंड को ग्रहण करके सूर्य के अभिमुख स्थित होकर (सूर्य-पूजन करके) दाईं ओर से अग्नि के चारों ओर घूमकर (प्रदक्षिणा करके) विधि के अनुसार भिक्षा के लिए अटन करे।

---

४८. प्रदक्षिणं परीत्य—कु० प्रदक्षिणीकृत्य । बल्हरः—'प्रदक्षिणम्' इत्यस्य पूर्वम् अर्थं करोति—turning his right hand towards it. नायमर्थः साधुः ।

**भवत्पूर्वं चरेद्भैक्षमुपनीतो द्विजोत्तमः ।**
**भवन्मध्यं तु राजन्यो वैश्यस्तु भवदुत्तरम् ॥ ४९ ॥**

भवदिति ॥ ब्राह्मणो 'भवति भिक्षां देहि' इति भवच्छब्दपूर्वं भिक्षां याचन् वाक्यमुच्चारयेत् । क्षत्रियो 'भिक्षां भवति देहि' इति भवन्मध्यम् । वैश्यो 'भिक्षां देहि भवति' इति भवदुत्तरम् ॥ ४९ ॥

४९. उपवीत (जिनका यज्ञोपवीत अथवा उपनयन-संस्कार हो गया है, वह) श्रेष्ठ ब्राह्मण 'भवत्' को पहले [प्रयुक्त करके] भिक्षा मांगे (—भवति भिक्षां देहि), क्षत्रिय भवत् को मध्य में (भिक्षां भवति देहि) तथा वैश्य बाद में (भिक्षां देहि भवति) [प्रयुक्त करके भिक्षा मांगे]।

**मातरं वा स्वसारं वा मातुर्वा भगिनीं निजाम् ।**
**भिक्षेत भिक्षां प्रथमं या चैनं नावमानयेत् ॥ ५० ॥**

मातरं वेति ॥ उपनयनाङ्गभूतां भिक्षां प्रथमं मातरं भगिनीं वा मातुर्वा भगिनीं सहोदरां याचेत् । या चैनं ब्रह्मचारिणं प्रत्याख्यानेन नावमन्येत । पूर्वाभावेन उत्तरापरिग्रहः ॥ ५० ॥

५०. पहली भिक्षा माँ, बहन, या अपनी मासी (माँ की बहन) से मांगे जिनके इसका अवमान करने की सम्भावना नहीं है [अर्थात् इनमें से कोई मना नहीं करेगा—इनमें भी पहला-पहला मुख्य है। उससे प्राप्त न होने पर अगले से मांगे]।

**समाहृत्य तु तद्भैक्षं यावदन्नममायया ।**
**निवेद्य गुरवेऽश्नीयादाचम्य प्राङ्मुखः शुचिः ॥५१॥**

समाहृत्येति ॥ तद्भैक्षं बहुभ्य आहृत्य यावदन्नं तृप्तिमात्रोचितं गुरवे निवेद्य निवेदनं कृत्वा अमायया न कपटेन तदन्नं प्रच्छादयन्नेतद्गुरुर्ग्रहीष्यतीत्यादि-मायाव्यतिरेकेण तदनुज्ञात आचमनं कृत्वा शुचिः सन् प्राङ्मुखो भुञ्जीत ॥५१॥

५१. जितने की आवश्यकता है उतना वह अन्न लाकर, बिना छल (चालाकी) के गुरु के सम्मुख निवेदन करके, आचमन करके, पूर्व की ओर मुंह किये हुए पवित्र हुआ हुआ खाये।

५३. द्विज नित्य आचमन करके ध्यान में लीन होकर (अनन्यमन होकर, एकाग्र होकर) अन्न खाये, और खाकर [ फिर ] आचमन करे और जल से [ सिर में स्थित ] इन्द्रियों का या छः छिद्रों का स्पर्श करे। (छः छिद्र—दो आँखें, दो कान, दो नासिकारन्ध्र)।

**पूजयेदशनं नित्यमद्याच्चैतदकुत्सयन् ।**
**दृष्ट्वा हृष्येत्प्रसीदेच्च प्रतिनन्देच्च सर्वशः ॥ ५४ ॥**

पूजयेदशनमिति ॥ सर्वदा अन्नं पूजयेत्प्राणार्थत्वेन ध्यायेत् । तदुक्तमादिपुराणे—'अन्नं विष्णुः स्वयं प्राह' इत्युपक्रम्य 'प्राणार्थं मां सदा ध्यायेत स मां सम्पूजयेत्सदा । अनिन्दंश्चैनदश्नीयात् दृष्ट्वा हृष्येत् प्रसीदेच्च' इति । हेत्वन्तरजमपि खेदमन्नदर्शनेन त्यजेत् । प्रतिनन्देत् नित्यमस्माकमेतदस्त्वित्यभिधाय वन्दनं प्रतिनन्दनम् । तदुक्तमादिपुराणे—'अन्नं दृष्ट्वा प्रणम्यादौ प्राञ्जलिः कथयेत्ततः । अस्माकं नित्यमस्त्वेतदिति भक्त्या स्तुवन्नमेत् ॥' सर्वशः सर्वमन्नम् ॥ ५४ ॥

५४. भोजन की सर्वदा पूजा करे और न निन्दा करता हुआ खाये; देख कर हृष्ट तथा प्रसन्न हो तथा सब प्रकार से अभिनन्दन करे।

**पूजितं ह्यशनं नित्यं बलमूर्जं च यच्छति ।**
**अपूजितं तु तद्भुक्तमुभयं नाशयेदिदम् ॥ ५५ ॥**

पूजितमिति ॥ यस्मात्पूजितमन्नं सामर्थ्यं वीर्यं च ददाति, अपूजितं पुनरेतदुभयं नाशयति; तस्मात्सर्वदान्नं पूजयेदिति पूर्वेणैकवाक्यतापन्नमिदं फलश्रवणम् । सन्ध्यावन्दनादावश्रुतदुरितक्षयवन्नित्ये कामनाविषयत्वेनापि नित्यश्रुतिर्विहता नित्यश्रुतिविरोधात् । फलश्रवणं स्तुत्यर्थमिति तु मेधातिथिगोविन्दराजौ ॥ ५५ ॥

५५. पूजा किया गया (सम्मान किया गया) भोजन बल और ऊर्जा (शक्ति, एनर्जी) देता है और अपूजित वह [ अन्न ] खाया हुआ इन दोनों को नष्ट कर देता है।

**नोच्छिष्टं कस्यचिद् दद्यान्नाद्याच्चैव तथान्तरा ।**
**न चैवात्यशनं कुर्यान्न चोच्छिष्टः क्वचिद् व्रजेत् ॥५६॥**

५८. ब्राह्मण सदा ब्राह्मण तीर्थ, प्रजापतिसंबन्धी [तीर्थ], से देवसम्बन्धी [तीर्थ] से आचमन करे; पितर-संबन्धी तीर्थ से कभी नहीं [आचमन करे] ।

ब्राह्मादितीर्थान्याह—

**अङ्गुष्ठमूलस्य तले ब्राह्मं तीर्थं प्रचक्षते ।**
**कायमङ्गुलिमूलेऽग्रे दैवं पित्र्यं तयोरधः ॥ ५९ ॥**

अङ्गुष्ठमूलस्येति ॥ अङ्गुष्ठमूलस्याधोभागे ब्राह्मं, कनिष्ठाङ्गुलिमूले कायम्, अङ्गुलीनामग्रे दैवं, अङ्गुष्ठप्रदेशिन्योर्मध्ये पित्र्यं तीर्थं मन्वादय आहुः । यद्यपि कायमङ्गुलिमूले, नत्वेव इत्यत्र चाङ्गुलिमात्रं श्रुतं तथापि स्मृत्यन्तराद्विशेषपरिग्रहः । तथा च याज्ञवल्क्यः (१।१९)—'कनिष्ठादेशिन्यङ्गुष्ठमूलान्यग्रं करस्य च । प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात्' ॥ ५९ ॥

५९. अँगूठे के मूल तल में ब्राह्म तीर्थ, [कनिष्ठिका] उँगली के मूल में काय (कसम्बन्धी—प्रजापतिसंबन्धी) [तीर्थ], [उँगलियों के] अग्रभाग में देवसंबन्धी [तीर्थ] कहते हैं, अँगूठे तथा तर्जनी (प्रदेशिका) के नीचे पितरसम्बन्धी [तीर्थ कहते हैं ।]

ब्राह्मादितीर्थनिर्दिष्टस्याचमनस्यानुष्ठानक्रममाह—

**त्रिराचामेदपः पूर्वं द्विः प्रमृज्यात्ततो मुखम् ।**
**खानि चैव स्पृशेदद्भिरात्मानं शिर एव च ॥ ६० ॥**

त्रिराचामेदिति ॥ पूर्वं ब्राह्मादितीर्थेन जलगण्डूषत्रयं पिबेत् । अनन्तरं संवृतौष्ठाधरो वारद्वयमङ्गुष्ठमूलेन प्रमृज्यात् । 'संवृत्याङ्गुष्ठमूलेन द्विः प्रमृज्यात्ततो मुखम्' इति दक्षेण विशेषाभिधानात् । खानि चेन्द्रियाणि जलेन स्पृशेत् । मूर्धन्य सन्निधानान्मुखस्थान्येव । गौतमोऽप्याह—'खानि चोपस्पृशेच्छीर्षण्यानि', 'हृदन्तर्ज्योतिः पुरुषः' (बृह. ४।३।७) इत्युपनिषत्सु हृदयदेशत्वेनात्मनः श्रवणादात्मानं हृदयं शिरश्चाद्भिरेव स्पृशेत् ॥ ६० ॥

६०. पहले तीन बार जल का आचमन करे, उसके अनन्तर मुख का दो बार संमार्जन करके (पोंछकर) जल से इन्द्रियों का (शिर में स्थित छिद्रों-इन्द्रियों को) आत्मा [के निवास स्थान हृदय] को और सिर का [जल से स्पर्श करे]

अनुष्णाभिरफेनाभिरद्भिस्तीर्थेन धर्मवित् ।
शौचेप्सुः सर्वदाचामेदेकान्ते प्रागुदङ्मुखः ॥ ६१ ॥

अनुष्णाभिरिति ॥ अनुष्णीकृताभिः फेनवर्जिताभिरद्भिर्ब्राह्म्यादितीर्थेन शौचमिच्छन्नेकान्ते जनैरनाकीर्णे शुचिदेश इत्यर्थः । प्राङ्मुख उदङ्मुखो वा सर्वदाचामेत् । आपस्तम्बेन 'तप्ताभिश्च कारणात्' इत्यभिधानाद् व्याध्यादिकारणव्यतिरेकेण नाचामेत् । व्याध्यादौ तु उष्णीकृताभिरप्याचमने दोषाभावः । तीर्थव्यतिरेकेणाचमने शौचाभाव इति दर्शयितुमुक्तस्यापि तीर्थस्य पुनर्वचनम् ॥ ६१ ॥

६१. अनुष्ण (जो गर्म न हो), फेन से रहित जल से, तीर्थ (हाथ) से, धर्म को जानने वाला, शुद्धता को चाहने वाला सदा एकान्त में पूर्व या उत्तर की ओर मुँह किए हुये आचमन करे ।

आचमनजलपरिमाणमाह—

हृद्गाभिः पूयते विप्रः कण्ठगाभिस्तु भूमिपः ।
वैश्योऽद्भिः प्राशिताभिस्तु शूद्रः स्पृष्टाभिरन्ततः ॥ ६२ ॥

हृद्गाभिरिति ॥ ब्राह्मणो हृदयगामिनीभिः, क्षत्रिय कण्ठगामिनीभिः, वैश्योऽन्तरास्यप्रविष्टाभिः कण्ठमप्राप्ताभिरपि, शूद्रो जिह्वौष्ठान्तेनापि स्पृष्टाभिरद्भिः पूतो भवति । अन्तत इति तृतीयार्थे तसिः ॥ ६२ ॥

६२. हृदय तक गए हुये जलों से विप्र, कण्ठ तक गये हुए जलों से राजा, प्राशित (मुँह में गए हुए) जलों से वैश्य, [होठों के] सिरे से छुए हुए जलों से शूद्र पवित्र कर दिया जाता है ।

आचमनाङ्गत्वादुपवीतस्य दर्शयितुमुपवीतलक्षणं ततः प्रसङ्गेन प्राचीनावीतीनिवीत्यादिलक्षणमाह—

उद्धृते दक्षिणे पाणावुपवीत्युच्यते द्विजः ।
सव्ये प्राचीन आवीती निवीती कण्ठसज्जने ॥ ६३ ॥

उद्धृते इति ॥ दक्षिणे पाणावुद्धृते वामस्कन्धस्थिते दक्षिणस्कन्धावलम्बे यज्ञसूत्रे वस्त्रे वोपवीती द्विजः कथ्यते । वामे पाणावुद्धृते दक्षिणस्कन्धस्थिते

वामस्कन्धावलम्बे प्राचीनावीती भवति । सव्यं प्राचीन आवीतीति छन्दोऽनुरोधादुक्तम् तथा च गोभिलः—'दक्षिणं बाहुमुद्धृत्य शिरोऽवधाय सव्येंऽसे प्रतिष्ठापयति दक्षिणस्कन्धमवलम्बनं भवत्येवं यज्ञोपवीती भवति'। सव्यं बाहुमुद्धृत्य शिरोऽवधाय दक्षिणेंऽसे प्रतिष्ठापयति सव्यं कक्षमवलम्बनं भवत्येवं प्राचीनावीती भवति । निवीती कण्ठसज्जन इति । शिरोऽवधाय दक्षिणपाण्यादावप्यनुद्धृते कण्ठादेव सज्जने ऋजुप्रालम्बे यज्ञसूत्रे वस्त्रे च निवीती भवति ॥ ६३ ॥

६३. द्विज दायें हाथ के उठे हुए होने पर उपवीती, बायें [हाथ के उठे हुए होने] पर प्राचीनावीती, कण्ठ में [यज्ञोपवीत के] लटकते हुए होने पर निवीती कहलाता है ।

**मेखलामजिनं दण्डमुपवीतं कमण्डलुम् ।**
**अप्सु प्रास्य विनष्टानि गृह्णीतान्यानि मन्त्रवत् ॥ ६४ ॥**

मेखलामिति ॥ मेखलादीनि विनष्टानि भिन्नानि छिन्नानि च जले प्रक्षिप्यान्यानि स्वस्वगृह्योक्तमन्त्रैर्गृह्णीयात् ॥ ६४ ॥

६४. जीर्ण हुए हुए मेखला, [मृग] चर्म, दण्ड, यज्ञोपवीत, कमण्डलु को भिन्नछिन्न या जल में फेंककर मन्त्र के साथ (मन्त्रोच्चारण के साथ) दूसरे (नये) ग्रहण करे ।

**केशान्तः षोडशे वर्षे ब्राह्मणस्य विधीयते ।**
**राजन्यबन्धोर्द्वाविंशे वैश्यस्य द्व्यधिके ततः ॥ ६५ ॥**

केशान्त इति ॥ केशान्ताख्यो गृह्योक्तसंस्कारो 'गर्भादिसंख्या वर्षाणाम्' इति बौधायनवचनाद् गर्भषोडशे वर्षे ब्राह्मणस्य, क्षत्रियस्य गर्भद्वाविंशे, वैश्यस्य ततो द्व्यधिके गर्भचतुर्विंशे कर्तव्यः ॥ ६५ ॥

---

६३. (जब दायाँ हाथ उठता है—उस समय यज्ञोपवीत या वस्त्र बायें कन्धे पर स्थित होता है और दायें कन्धे से लटक रहा होता है । जब बायाँ हाथ उठता है उस समय यज्ञोपवीत दायें कन्धे पर स्थित होता है और बायें कंधे से लटक रहा होता है ।

६५. ब्राह्मण का केशान्त [संस्कार] [गर्भ से] १६वें वर्ष में, क्षत्रिय का [गर्भ से] २२वें वर्ष में, वैश्य का [गर्भ से] उससे दो अधिक (२४वें) वर्ष में किया जाता है।

**अमन्त्रिका तु कार्येयं स्त्रीणामावृदशेषतः ।**

**संस्कारार्थं शरीरस्य यथाकालं यथाक्रमम् ॥ ६६ ॥**

अमन्त्रिकेति ॥ इयमावृदयं जातकर्मादिक्रियाकलापः समग्र उक्तकालक्रमेण शरीरसंस्कारार्थं स्त्रीणाममन्त्रकः कार्यः ॥ ६६ ॥

६६. यह संपूर्ण आवृत् स्त्रियों की (क्रिया-परम्परा, series) और यथाक्रम शरीर के संस्कार के लिए बिना मन्त्रों के (मन्त्रोच्चारण के बिना) की जानी चाहिए।

अनेनोपनयनेऽपि प्राप्ते विशेषमाह—

**वैवाहिको विधिः स्त्रीणां संस्कारो वैदिकः स्मृतः ।**

**पतिसेवा गुरौ वासो गृहार्थोऽग्निपरिक्रिया ॥ ६७ ॥**

वैवाहिक इति ॥ विवाहविधिरेव स्त्रीणां वैदिकः संस्कार उपनयनाख्यो मन्वादिभिः स्मृतः । पतिसेवैव गुरुकुले वासो वेदाध्ययनरूपः । गृहकृत्यमेव सायंप्रातः समिद्धोमरूपोऽग्निपरिचर्या । तस्माद्विवाहादेरुपनयनस्थाने विधानादुपनयनादिनिवृत्तिरिति ॥ ६७ ॥

६७. विवाह-विधि ही स्त्रियों का वैदिक संस्कार (उपनयन-संस्कार) कहा गया है, पतिसेवा ही गुरु में (गुरुकुल) में [वेदाध्ययन-रूप] वास, गृहार्थ (गृहकृत्य ही) अग्निपरिचर्या (हवन-आदि) कहा गया है।

**एष प्रोक्तो द्विजातीनामौपनायनिको विधिः ।**

**उत्पत्तिव्यञ्जकः पुण्यः कर्मयोगं निबोधत ॥ ६८ ।**

एष इति ॥ औपनायनिक इत्यनुशतिकादित्वादुभयपदवृद्धिः । अयं द्विजातीनामुपनयनसंबन्धी कर्मकलाप उक्तः उत्पत्तेर्द्वितीयजन्मनो व्यञ्जकः ॥६८॥

६८. यह द्विजातियों के [नवीन, द्वितीय] जन्म की व्यञ्जक पुण्य विधि कही गई; [अब उनके] कर्म योग (कार्य, कर्तव्य, ड्यूटी) को जानो।

इदानीमुपनीतस्य येन कर्मणा योगस्तं शृणुतेत्याह—

**उपनीय गुरुः शिष्यं शिक्षयेच्छौचमादितः ।**
**आचारमग्निकार्यं च संध्योपासनमेव च ॥ ६९ ॥**

उपनीय गुरुरिति ॥ गुरुः शिष्यमुपनीय प्रथमं 'एका लिङ्गे गुदे तिस्रः' (५।१३६) इत्यादिवक्ष्यमाणं शौचं स्नानाचमनाद्याचारमग्नौ सायंप्रातः समिद्धोमानुष्ठानं सन्ध्योपासनविधिं च शिक्षयेत् ॥ ६९ ॥

६९. गुरु शिष्य का उपनयन करके सर्वप्रथम शौच (सफाई), स्नान, आचमन आदि) आचार, अग्निकार्य (साय-प्रातः हवन) तथा सन्ध्योपासन सिखाए।

**अध्येष्यमाणस्त्वाचान्तो यथाशास्त्रमुदङ्मुखः ।**
**ब्रह्माञ्जलिकृतोऽध्याप्यो लघुवासा जितेन्द्रियः ॥ ७० ॥**

अध्येष्यमाण इति ॥ अध्ययनं करिष्यमाणः शिष्यो यथाशास्त्रं कृताचमन उत्तराभिमुखः कृताञ्जलिः पवित्रवस्त्रः कृतेन्द्रियसंयमो गुरुणाऽध्याप्यः। 'प्राङ्मुखो दक्षिणतः शिष्य उदङ्मुखो वा' इति गौतमवचनात्प्राङ्मुखस्याप्यध्ययनम् । ब्रह्माञ्जलिकृत इति 'वाहिताग्न्यादिषु' (पा. २।२।३७) इत्यनेन 'कृत'शब्दस्य परनिपातः ॥ ७० ॥

७०. जिसने अध्ययन करना है ऐसा अध्याप्य (गुरु के द्वारा जिसे पढ़ाया जाना है, शिष्य) शास्त्र के अनुसार जिसने आचमन किया है ऐसा, उत्तर की ओर मुँह किए हुए ब्रह्माञ्जलि को करके (बाँधकर) लघु (हल्के, पवित्र) वस्त्रों वाला, जीत ली है इन्द्रियाँ जिसने ऐसा [हो]

**ब्रह्मारम्भेऽवसाने च पादौ ग्राह्यौ गुरोः सदा ।**
**संहत्य हस्तावध्येयं स हि ब्रह्माञ्जलिः स्मृतः ॥ ७१ ॥**

ब्रह्मारम्भेऽवसाने चेति ॥ वेदाध्ययनस्यारम्भे कर्तव्ये समापने च कृते गुरोः पादोपसंग्रहणं कर्तव्यम् । हस्तौ संहत्य संश्लिष्टौ कृत्वाऽध्येतव्यम् । 'स हि ब्रह्माञ्जलिः स्मृतः' इति पूर्वश्लोकोक्त'ब्रह्माञ्जलि'शब्दार्थव्याख्यानम् ॥ ७१ ॥

७१. वेद [के अध्ययन] के आरम्भ और अवसान में सदा गुरु के चरण पकड़े जाने चाहिए (हाथों से गुरु के चरण पकड़कर प्रणाम करना चाहिए), हाथों को संश्लिष्ट करके (जोड़कर) पढ़ना चाहिए। यह ब्रह्माञ्जलि कहलाती है।

**व्यत्यस्तपाणिना कार्यमुपसंग्रहणं गुरोः ।**
**सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन च दक्षिणः ॥ ७२ ॥**

व्यत्यस्तपाणिनेति ॥ पादोपसंग्रहणं कार्यमित्यनन्तरमुक्तं तद् व्यत्यस्तपाणिना कार्यमिति विधीयते । कीदृशो व्यत्यासः कार्य इत्यत आह—सव्येन पाणिना सव्यः पादो दक्षिणेन पाणिना दक्षिणः पादो गुरोः स्प्रष्टव्यः । उत्तानहस्ताभ्यां चेदं पादयोः स्पर्शनं कार्यम् । यदाह पैठीनसिः—'उत्तानाभ्यां हस्ताभ्यां दक्षिणेन दक्षिणं सव्यं सव्येन पादावभिवादयेत् । दक्षिणोपरिभावेन व्यत्यासो वाच्य शिष्टसमाचारात्' ॥ ७२ ॥

७२. व्यत्यस्त हाथ से गुरु के [चरणों का] उपसंग्रहण (पास से भली भांति पकड़ना) किया जाना चाहिए, बाएं हाथ से बायां [चरण] दाएं (हाथ) से दायां [चरण] ग्रहण किया जाना चाहिए । व्यत्यस्त = × ।

**अध्येष्यमाणं तु गुरुर्नित्यकालमतन्द्रितः ।**
**अधीष्व भो इति ब्रूयाद्विरामोऽस्त्विति चारमेत् ॥ ७३ ॥**

अध्येष्यमाणमिति ॥ अध्ययनं करिष्यमाणं शिष्यं सर्वदा अनलसो गुरुः 'अधीष्व भोः' इति प्रथमं वदेत् । शेषे 'विरामोऽस्तु' इत्यभिधाय विरमेन्निवर्तेत ॥ ७३ ॥

७३. जो अध्ययन करेगा ऐसे (अध्ययन के लिए प्रस्तुत) [शिष्य] को सदा तन्द्रा से रहित गुरु—'हे, पढ़,' इस प्रकार कहे [पढ़ाई समाप्त होने पर] विराम होवे—इस से निवृत्त हो (पढ़ना बंद करे) ।

**ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा ।**
**स्रवत्यनोङ्कृतं पूर्वं पुरस्ताच्च विशीर्यति ॥ ७४ ॥**

ब्रह्मणः प्रणवमिति ॥ ब्रह्मणो वेदस्याध्ययनारम्भे अध्ययनसमाप्तौ चोङ्कारं कुर्यात् । यस्मात्पूर्वं यस्योङ्कारो न कृतस्तत्स्रवति शनैः शनैर्नश्यति, यस्य पुरस्तान्न कृतस्तद्विशीर्यति अवस्थितिमेव न लभते ॥ ७४ ॥

७४. वेद [अध्ययन] के प्रारम्भ में तथा अन्त में सदा प्रणव ('ओम्' का उच्चारण) करे; [अध्ययन] से पहले अनोङ्कृत (जहाँ ओम् नहीं किया गया वह) [धीरे-धीरे] नष्ट हो जाता है तथा बाद में [जहाँ ओम् नहीं किया गया वह] विशीर्ण हो जाता है ।

**प्राक्कूलान्पर्युपासीनः पवित्रैश्चैव पावितः ।**
**प्राणायामैस्त्रिभिः पूतस्तत ओङ्कारमर्हति ॥ ७५ ॥**

प्राक्कूलानिति ॥ प्राक्कूलान्प्रागग्रान्दर्भानध्यासीनः पवित्रैः कुशैः करद्वयस्थैः पवित्रीकृतः 'प्राणायामास्त्रयः पञ्चदशमात्राः' (१।४९) इति गौतमस्मरणात्पञ्चदशमात्रैस्त्रिभिः प्राणायामैः प्रयतः । अकारादिलघ्वक्षरकालश्च मात्रा । ततोऽध्ययनार्थमोङ्कारमर्हति ॥ ७५ ॥

७५. पूर्व की ओर है नोकें जिन की ऐसी कुशाओं पर [कुशासन पर] भली भाँति स्थिर होकर बैठा हुआ तथा पवित्रों (कुशाओं, दोनों हाथों में ली गई कुशाओं) से पवित्र किया गया, तीन प्राणायामों से पवित्र किया गया, उसके अनन्तर ओङ्कार के योग्य होता है (उसके नामोच्चारण का अधिकारी होता है) ।

**अकारं चाप्युकारं च मकारं च प्रजापतिः ।**
**वेदत्रयान्निरदुहद्भूर्भुवः स्वरितीति च ॥ ७६ ॥**

अकारं चेति ॥ 'एतदक्षरमेतां च' (२।७८) इति वक्ष्यति तस्यायं शेषः । अकारमुकारं मकारं च प्रजापतिर्ब्रह्मा वेदत्रयादृग्यजुःसामलक्षणाद्भूर्भुवःस्वरिति व्याहृतित्रयं च क्रमेण निरदुहदुद्धृतवान् ॥ ७६ ॥

७६. प्रजापति ने वेदत्रय से (तीनों वेदों से—ऋक्, यजु, तथा साम) से (क्रमशः) अकार, उकार और मकार को तथा भूः, भुवः और स्वः (व्याहृतियों) को दुहा ।

**त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत् ।**
**तदित्यृचोऽस्याः सावित्र्याः परमेष्ठी प्रजापतिः ॥ ७७ ॥**

---

७४. स्रवति—√स्रु गतौ
विशीर्यति—वि-√शॄ हिंसायाम्

त्रिभ्य एवेति ॥ तथा त्रिभ्य एव वेदेभ्य ऋग्यजुःसामभ्यः तदित्यृच इति प्रतीकेनानूदितायाः सावित्र्याः पादं पादमिति त्रीन्पादान् ब्रह्मा चकर्ष। परमे स्थाने तिष्ठतीति परमेष्ठी ॥ ७७ ॥

७७. परम स्थान में स्थित प्रजापति ने तीनों वेदों से ही इस सावित्री के 'तत्' इस प्रकार [प्रारम्भ होने वाली] ऋचा (तत्सवितुर्वरेण्यं...) के पाद-पाद को दुहा। —सावित्री के तीन पाद हैं: प्रथम पाद ऋग्वेद से, द्वितीय यजुर्वेद से, तृतीय सामवेद से दुहा।

यत एवमतः—

**एतदक्षरमेतां च जपन्व्याहृतिपूर्विकाम्।**
**संध्ययोर्वेदविद्विप्रो वेदपुण्येन युज्यते ॥ ७८ ॥**

एतदक्षरमिति ॥ एतदक्षरमोङ्काररूपम्, एतां च त्रिपदां सावित्रीं व्याहृतित्रयपूर्विकां संध्याकाले जपन्वेदज्ञो विप्रो वेदत्रयाध्ययनपुण्येन युक्तो भवति। अतः संध्याकाले प्रणवव्याहृतित्रयोपेता सावित्री जपेदिति विधिः कल्प्यते ॥ ७८ ॥

७८. इस अक्षर (ओम्) को और व्याहृतिपूर्वक इस [सावित्री] को दोनों संध्याकालों में जपता हुआ वेद को जानने के वाला ब्राह्मण वेदपुण्य से (तीनों वेदों के अध्ययन के पुण्य से) युक्त हो जाता है।

**सहस्रकृत्वस्त्वभ्यस्य बहिरेतत्त्रिकं द्विजः।**
**महतोऽप्येनसो मासात्त्वचेवाहिर्विमुच्यते ॥ ७९ ॥**

सहस्रकृत्व इति ॥ संध्यायामन्यत्र काले एतत्त्रिकं प्रणवव्याहृतित्रय-सावित्र्यात्मकं त्रिकं ग्रामाद्बहिर्नदीतीरारण्यादौ सहस्रावृत्ति जपित्वा महतोऽपि पापात्सर्प इव कञ्चुकान्मुच्यते। तस्मात्पापक्षयार्थमिदं जपनीयमित्यप्रकरणेऽपि लाघवार्थमुक्तम्। अन्यथैतदर्थमन्यत्रारम्भणमपि पुनः कर्तव्यं स्यात् ॥ ७९ ॥

---

७७. ऋग्वेदे ज्ञानं वर्णनं च—तत्सवितुर्वरेण्यम्।
यजुर्वेदे क्रिया—भर्गो देवस्य धीमहि।
सामवेदे आनन्दः प्रेरणा च—धियो यो नः प्रचोदयात्।

७९. ब्राह्मण इस त्रिक का बाहर हजार बार अभ्यास करके (जपकर) एक ही मास में, त्वचा (केंचुली) से साँप के समान बड़े पाप से छूट भी जाता है।

**एतयर्चा विसंयुक्तः काले च क्रियया स्वया ।**
**ब्रह्मक्षत्रियविड्योनिर्गर्हणां याति साधुषु ॥ ८० ॥**

एतयर्चेति ॥ संध्यायामन्वय समय ऋचैतया सावित्र्या विसंयुक्तस्त्यक्तसावित्रीजपः स्वकीयया क्रियया सायंप्रातर्होमादिरूपया स्वकाले त्यक्तो ब्राह्मणः क्षत्रियो वैश्योऽपि सज्जनेषु निन्दां गच्छति। तस्मात्स्वकाले सावित्रीजपं स्वक्रियां च न त्यजेत् ॥ ८० ॥

८०. इस ऋक् (सावित्रीमन्त्र) से विसंयुक्त (अलग-अलग हुआ) तथा काल में (सायं प्रातः) क्रिया (संध्या हवन आदि क्रिया) से विसंयुक्त ब्राह्मण क्षत्रिय और वैश्य, साधुओं में निन्दा को प्राप्त होता है।

---

७९. बहिः—कुल्लूकः—संध्या से दूसरे काल में, बल्हरः—out side (the village)

त्रिक—तीन की जोड़ी (यहां तीन त्रिक हैं।)

१. अ उ म्
२. भू भुवः स्वः
३. सावित्री (गायत्री) मन्त्र के तीन पाद—
(क) तत्सवितुर्वरेण्यम्
(ख) भर्गो देवस्य धीमहि
(ग) धियो यो नः प्रचोदयात्

ऐतरेयब्राह्मणम् २५.७. ऋग्वेद एवाग्नेरजायत। यजुर्वेदो वायोः। सामवेद आदित्यात्। तान् वेदान् अभ्यतपत्। तेभ्योऽभितप्तेभ्यस्त्रीणि शुक्राण्यजायन्त। भूरित्येव ऋग्वेदादजायत। भुव इति यजुर्वेदात्। स्वरिति सामवेदात्। तानि शुक्राण्यभ्यतपत्। तेभ्योऽभितप्तेभ्यस्त्रयो वर्णा अजायन्त—अकार उकारो मकार इति। तानेकधा समभरत्। तदेतदोमिति। ......एतानि ह वै वेदानामन्तः श्लेषणानि। यदेता व्याहृतयः।

८०. विशो योनिर्यस्य स विड्योनिर्वैश्यः।

**ओङ्कारपूर्विकास्तिस्रो महाव्याहृतयोऽव्ययाः ।**
**त्रिपदा चैव सावित्री विज्ञेयं ब्रह्मणो मुखम् ॥ ८१ ॥**

ओङ्कारपूर्विका इति ॥ ओङ्कारपूर्विकास्तिस्रो व्याहृतयो भूर्भुवःस्वरित्येता अक्षरब्रह्मावाप्तिफलत्वेनाव्ययाः । त्रिपदा च सावित्री ब्रह्मणो वेदस्य मुखमाद्यम् । तत्पूर्वकवेदाध्ययनारम्भात् । अथवा ब्रह्मणः परमात्मनः प्राप्तेर्द्वारमेतत् । अध्ययनजपादिना निष्पापस्य ब्रह्मज्ञानप्रकर्षेण मोक्षावाप्तेः ॥ ८१ ॥

८१. ओङ्कार है पहले जिनके ऐसी तीन अव्यय महाव्याहृतियां (भूः भुवः स्वः) तथा त्रिपदा (तीन चरणों वाली) सावित्री—[इन्हें] ब्रह्म का मुख जानना चाहिए ।

अत एवाह—

**योऽधीतेऽहन्यहन्येतां त्रीणि वर्षाण्यतन्द्रितः ।**
**स ब्रह्म परमभ्येति वायुभूतः खमूर्तिमान् ॥ ८२ ॥**

योऽधीत इति ॥ यः प्रत्यहमनलसः सन्सावित्रीं प्रणवव्याहृतियुक्तां वर्षत्रयमधीते स परं ब्रह्माभिमुखेन गच्छति । स वायुभूतो वायुरिव कामचारी जायते । खं ब्रह्म तदेवास्य मूर्तिरिति खमूर्तिमान् भवति शरीरस्यापि नाशाद् ब्रह्मैव संपद्यते ॥ ८२ ॥

८२. जो अतन्द्रित (बिना तन्द्रा, आलस्य के) तीन वर्ष तक दिन दिन में (प्रतिदिन) इस (सावित्री) को पढ़ता है (जपता है), वह वायु हुआ हुआ, आकाश की मूर्ति वाला [हुआ हुआ] परम ब्रह्म को प्राप्त करता है ।

**एकाक्षरं परं ब्रह्म प्राणायामाः परं तपः ।**
**सावित्र्यास्तु परं नास्ति मौनात्सत्यं विशिष्यते ॥ ८३ ॥ ×**

एकाक्षरमिति ॥ एकाक्षरमोङ्कारः परं ब्रह्म, परब्रह्मावाप्तिहेतुत्वात् । ओङ्कारस्य जपेन तदर्थस्य च परब्रह्मणो भावनया तदवाप्तेः । प्राणायामाः सप्रणवसव्याहृतिसशिरस्कगायत्रीभिस्त्रिरावृत्तिभिः । कृच्छ्रचान्द्रायणादिभ्योऽपि परं

तप: । प्राणायामा इति बहुवचननिर्देशात्त्रयोऽवश्यं कर्तव्या इत्युक्तम् । सावित्र्याः प्रकृष्टमन्यन्मन्त्रजातं नास्ति । मौनादपि सत्यं वाग्विशिष्यते । एषां चतुर्णां स्तुत्या चत्वार्येतान्युपासनीयानीति विधिः कल्प्यते । मेधातिथिना तु 'एकाक्षरपरं ब्रह्म प्राणायामपरं तप:' इति पठितं, व्याख्यातं च—एकाक्षरं परं यस्य तदेकाक्षरपरम्, एवं प्राणायामपरमिति । 'मेधातिथिप्रभृतिभिर्यदुत्किलितं मत: । क्लिष्टव्याख्यानादरं तत्र स्वमतौ परीक्षितं' ॥ ८३ ॥

८३. एकाक्षर (ओम्) परम ब्रह्म है, प्राणायाम परम तप है, सावित्री से परे (उत्कृष्ट) [कुछ भी] नहीं है; मौन से सत्य (सत्यभाषण) बढ़कर है।

**क्षरन्ति सर्वा वैदिक्यो जुहोति-यजतिक्रियाः ।**
**अक्षरं त्वक्षरं ज्ञेयं ब्रह्म चैव प्रजापतिः ॥ ८४ ॥**

क्षरन्तीति ॥ सर्वा वेदविहिता होमयागादिरूपाः क्रियाः स्वरूपतः फलतश्च विनश्यन्ति । अक्षरं तु प्रणवरूपमक्षयं ब्रह्मप्राप्तिहेतुत्वात्फलद्वारेणाक्षरं ब्रह्मीभावस्याविनाशात् । कथमस्य ब्रह्मप्राप्तिहेतुत्वमत आह—ब्रह्म चैवेति । चशब्दो हेतौ । यस्मात्प्रजानामधिपतिर्यद्ब्रह्म तद्वाचकोऽयमोङ्कारः । स्वरूपतो ब्रह्मप्रतिपादकत्वेन चास्य ब्रह्मत्वम् । उभयथापि ब्रह्मत्वप्रतिपादकत्वेन वाच-कप्राधान्यं जपकाले मोक्षहेतुत्वेन दर्शितम् ॥ ८४ ॥

८४. सब वैदिक होम तथा याग-रूप क्रियाएँ नष्ट हो जाती हैं; अक्षर (ओम्) अक्षर (न नष्ट होने वाला) जानना चाहिए [इसी ओम् को] ब्रह्म तथा प्रजापति जानना चाहिए।

**विधियज्ञाज्जपयज्ञो विशिष्टो दशभिर्गुणैः ।**
**उपांशुः स्याच्छतगुणः साहस्रो मानसः स्मृतः ॥ ८५ ॥**

विधियज्ञादिति ॥ विधिविषयो यज्ञो विधियज्ञो दर्शपौर्णमासादिस्तस्मा-त्प्रकृतानां प्रणवादीनां जपयज्ञो दशगुणाधिकः । सोऽप्युपांशुश्चेदनुष्ठितस्तदा शतगुणाधिकः । यत्समीपस्थोऽपि परो न शृणोति तदुपांशु । मानसस्तु जपः सहस्रगुणाधिकः । यत्र जिह्वौष्ठं मनागपि न चलति स मानसः ॥ ८५ ॥

---

८३. ऐतरेय ब्राह्मणम्. (२.१६)—सत्यं दीक्षा । तस्माद् दीक्षितेन सत्यमेव वक्तव्यम् ।

८५. विधियज्ञ से जपयज्ञ दसगुना, उपांशु [जप] सौ गुना तथा मानस (जप) हजार गुना कहा गया है ।

**ये पाकयज्ञाश्चत्वारो विधियज्ञसमन्विताः ।**
**सर्वे ते जपयज्ञस्य कलां नार्हन्ति षोडशीम् ॥ ८६ ॥**

ये पाकयज्ञा इति ॥ ब्रह्मयज्ञादन्ये ये पञ्चमहायज्ञान्तर्गता वैश्वदेवहोमबलिकर्मनित्यश्राद्धातिथिभोजनात्मकाश्चत्वारः पाकयज्ञाः विधियज्ञा दर्शपौर्णमासादयस्तैः सहिता जपयज्ञस्य षोडशीमपि कलां न प्राप्नुवन्ति । जपयज्ञस्य षोडशांशेनापि न समा इत्यर्थः ॥ ८६ ॥

८६. जो चार विधियज्ञों से युक्त पाकयज्ञ [हैं], वे सब जपयज्ञ की १६वीं कला (भाग, हिस्से) के योग्य भी नहीं है ।

**जप्येनैव तु संसिध्येद्ब्राह्मणो नात्र संशयः ।**
**कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥८७॥**

जप्येनैवेति ॥ ब्राह्मणो जप्येनैव निःसंदेहां सिद्धिं लभते मोक्षप्राप्तियोग्यो भवति । अन्यद्वैदिकं यागादिकं करोतु न करोतु वा । यस्मान्मैत्रो ब्राह्मणो

---

८५. विधियज्ञ—दर्श, पौर्णमास, आदि वेदशास्त्रविहित यज्ञ । उपांशु जप—होठों ही होठों में किया जाने वाला जप, यह किसी अन्य को सुनाई नहीं देता ।

उपांशु जपः —उपगता अंशवो यत्र । उपांशुजपलक्षणम्—

जिह्वोष्ठौ चालयेत् किञ्चिद्देवतागतमानसः ।
निजश्रवणयोग्यः स्यादुपांशुः स जपः स्मृतः ॥

जपस्त्रिविधः—

त्रिविधो जपयज्ञः स्यात् तस्य भेदान् निबोधत ।
वाचिकश्च ह्युपांशुश्च मानसश्च त्रिधा मतः ॥

८६. विधियज्ञ—दर्श, पौर्णमास आदि यज्ञ

चार पाक यज्ञ—१. वैश्वदेव होम २. बलिकर्म ३. नित्यश्राद्ध ४. अतिथि भोजन ।

ब्राह्मणः सम्बन्धी ब्रह्मणि लीयत इत्यागमेषूच्यते । मित्रमेव मैत्रः । स्वार्थेऽण् । यागादिषु पशुबीजादिवधात् सर्वप्राणिप्रियता संभवति, तस्माद्यागादिना विनापि प्रणवादिजपनिष्ठो निस्तरतीति जपप्रशंसा, न तु यागादीनां निषेधस्तेषामपि शास्त्रीयत्वात् ॥ ८७ ॥

८७. ब्राह्मण जपसंबन्धी [यज्ञ] से ही सिद्धि को प्राप्त करता है, इस विषय में संशय नहीं है; [कुछ] अन्य [क्रिया] करे या न करे, [क्योंकि] मैत्र (सबके प्रति मित्रता की भावना वाला) ब्राह्मण कहलाता है ।

इदानीं सर्ववर्णानुष्ठेयं सकलपुरुषार्थोपयुक्तमिन्द्रियसंयममाह—

**इन्द्रियाणां विचरतां विषयेष्वपहारिषु ।**
**संयमे यत्नमातिष्ठेद्विद्वान् यन्तेव वाजिनाम् ॥ ८८ ॥**

इन्द्रियाणामिति ॥ इन्द्रियाणां विषयेष्वपहरणशीलेषु वर्तमानानां क्षणिकत्वादिविषयदोषाञ्जानन् संयमे यत्नं कुर्यात्सारथिरिव रथनियुक्तानामश्वानाम् ॥ ८८ ॥

८८. विद्वान् विषयों में ले जाने के स्वभाव वाली इधर उधर भटकती हुई इन्द्रियों के संयम में यत्न करे, जैसे सारथि अश्वों [के नियन्त्रण में यत्न करता है] ।

**एकादशेन्द्रियाण्याहुर्यानि पूर्वे मनीषिणः ।**
**तानि सम्यक्प्रवक्ष्यामि यथावदनुपूर्वशः ॥ ८९ ॥**

एकादशेति ॥ पूर्वपण्डिता यान्येकादशेन्द्रियाण्याहुस्तान्यर्वाचां शिक्षार्थं सर्वाणि कर्मतो नामतश्च क्रमाद्वक्ष्यामि ॥ ८९ ॥

८९. पहले मनीषियों ने जिन ११ इन्द्रियों का कथन किया है उनका यथावत् (ठीक-ठीक) क्रमशः भली-भाँति सविस्तर कथन करूँगा ।

**श्रोत्रं त्वक् चक्षुषी जिह्वा नासिका चैव पञ्चमी ।**
**पायूपस्थं हस्तपादं वाक्चैव दशमी स्मृता ॥ ९० ॥**

---

८८. तुलना कियताम्—यजुर्वेदः ३४.६—
सुषारथिरश्वानिव यन्मनुष्यान्नेनीयतेऽभीशुभिर्वाजिन इव ।
हृत्प्रतिष्ठं यदजिरं जविष्ठं तन्मे मनः शिवसंकल्पमस्तु ॥

श्रोत्रमिति ॥ तेष्वेकादशसु श्रोत्रादीनि दशैतानि बहिरिन्द्रियाणि नामतो निर्दिष्टानि । पायूपस्थं हस्तपादमिति 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्' (पा. २।४।२) इति प्राण्यङ्गद्वन्द्वत्वादेकवद्भावः ॥ ९० ॥

९०. कान, त्वचा, आँखें, जिह्वा, और पाँचवीं नासिका, पायु, उपस्थ हाथ, पैर तथा वाणी दसवीं कही गई है ।

**बुद्धीन्द्रियाणि पञ्चैषां श्रोत्रादीन्यनुपूर्वशः ।**
**कर्मेन्द्रियाणि पञ्चैषां पाय्वादीनि प्रचक्षते ॥ ९१ ॥**

बुद्धीन्द्रियाणीति ॥ एषां दशानां मध्ये श्रोत्रादीनि पञ्च क्रमोक्तानि बुद्धेः करणत्वाद् बुद्धीन्द्रियाणि । पाय्वादीनि चोत्सर्गादिकर्मकरणत्वात्कर्मेन्द्रियाणि तद्विदो वदन्ति ॥ ९१ ॥

९१. इनमें से क्रमशः पाँच श्रोत्र (कान) आदि को बुद्धीन्द्रियाँ (बुद्धि+इन्द्रिय=ज्ञानेन्द्रियाँ), इनमें से [क्रमशः] पाँच पायु आदि को कर्मेन्द्रियाँ कहते हैं ।

**एकादशं मनो ज्ञेयं स्वगुणेनोभयात्मकम् ।**
**यस्मिञ्जिते जितावेतौ भवतः पञ्चकौ गणौ ॥ ९२ ॥**

एकादशमिति ॥ एकादशसंख्यापूरकं च मनोऽन्तरिन्द्रियं ज्ञातव्यम् । स्वगुणेन संकल्परूपेणोभयरूपेन्द्रियगणप्रवर्तकस्वरूपम् । अत एव यस्मिन्मनसि जिते उभावपि पञ्चकौ बुद्धीन्द्रियकर्मेन्द्रियगणौ जितौ भवतः । पञ्चकाविति 'तदस्य परिमाणम्' (पा. ५।१।५७) इत्यनुवृत्तौ 'संख्यायाः संज्ञासंघसूत्राध्ययनेषु' (पा. ५।१।५८) इति पञ्चसंख्यापरिमितसङ्घार्थे कः ॥ ९२ ॥

९२. ११वाँ मन जानना चाहिए । [वह] अपने गुण से उभयात्मक ज्ञानेन्द्रिय तथा कर्मेन्द्रिय दोनों के स्वरूप वाला) है—जिसके जीते जाने पर ये दोनों पाँच-पाँच के समूह जीते हुए हो जाते हैं ।

मनोधर्मसंकल्पमूलत्वादिन्द्रियाणां प्रायेण प्रवृत्तेः किमर्थमिन्द्रियनिग्रहः कर्तव्य इत्यत आह—

---

९२. द्रष्टव्या टिप्पणी २.८८

इन्द्रियाणां प्रसङ्गेन दोषमृच्छत्यसंशयम् ।
संनियम्य तु तान्येव ततः सिद्धिं नियच्छति ॥९३॥

इन्द्रियाणामिति ॥ यस्मादिन्द्रियाणां विषयेषु प्रसक्त्या दृष्टादृष्टं च दोषं निःसंदेहं प्राप्नोति । तान्येव पुनरिन्द्रियाणि सम्यङ्नियम्य सिद्धिं मोक्षादिपुरुषार्थयोग्यतारूपां लभते । तस्मादिन्द्रियसंयमं कुर्यादिति शेषः ॥ ९३ ॥

९३. इन्द्रियों में प्रसक्त होने से [मनुष्य] निःसंशय (अवश्य ही) दोष को प्राप्त होता है। इनको ही संयत (नियन्त्रित) करके उसके बाद (या उस कारण से) सिद्धि को अपने नियन्त्रण में कर लेता है (वश में कर लेता है, प्राप्त कर लेता है)।

किमिन्द्रियसंयमेन विषयोपभोगादेवेच्छाकामो निवर्त्स्यतीत्याशङ्क्याह—

न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ ९४ ॥

न जात्विति ॥ न कदाचित्कामोऽभिलाषः काम्यन्त इति कामा विषयास्तेषामुपभोगेन निवर्तते, किंतु घृतेनाग्निरिवाधिकाधिकमभिवर्धते । प्राप्तभोगस्यापि] प्रतिदिनं तदधिकभोगाकाङ्क्षादर्शनात् । अत एव विष्णुपुराणे ययातिवाक्यम्—'यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः । एकस्यापि न पर्याप्तं तदित्यतितृषं त्यजेत् ॥' तथा—'पूर्णं वर्षसहस्रं मे विषयासक्तचेतसः । तथाप्यनुदिनं तृष्णा ममैतेष्वेव हि जायते ॥ ९४ ॥

९४. काम (इच्छा) कामों (इच्छाओं) के उपभोग से कभी भी शान्त नहीं होती; जैसे हवि से अग्नि [वह काम] और अधिक बढ़ जाता है।

यश्चैतान्प्राप्नुयात्सर्वान् यश्चैतान्केवलांस्त्यजेत् ।
प्रापणात्सर्वकामानां परित्यागो विशिष्यते ॥ ९५ ॥

यश्चैतानिति ॥ य एतान्सर्वान्विषयान्प्राप्नुयात्, यश्चैतान्कामानुपेक्षते, तयोर्विषयोपेक्षकः श्रेयान्; तस्मात्सर्वकामप्राप्तेस्तदुपेक्षा प्रशस्ता । तथा हि—विषयलोलुपस्य तत्साधनाद्युत्पादने कष्टसंभवो विपत्तौ च क्लेशातिशयो नतु विषयविरक्तस्य ॥ ९५ ॥

९५. जो इन सब (कामों, विषयों) को प्राप्त कर ले और जो इनको बिल्कुल छोड़ दे—सब कामों को प्राप्त करने से परित्याग (पूर्णतया छोड़ देना) बढ़कर (बेहतर) है ।

इदानीमिन्द्रियसंयमोपायमाह—

**न तथैतानि शक्यन्ते संनियन्तुमसेवया ।**
**विषयेषु प्रजुष्टानि यथा ज्ञानेन नित्यशः ॥ ९६ ॥**

न तथेति ॥ एतानीन्द्रियाणि विषयेषु प्रसक्तानि तथा नासेवया विषयसंनिधिवर्जनरूपया नियन्तुं न शक्यन्ते, दुर्निवारत्वात् । यथा सर्वदा विषयाणां क्षयित्वादिदोषज्ञानेन शरीरस्य च 'अस्थिस्थूणम्' (६।७६) इत्यादिवक्ष्यमाणदोषचिन्तनेन । तस्माद्विषयदोषज्ञानादिना बहिरिन्द्रियाणि मनश्च नियच्छेत् ॥ ९६ ॥

९६. विषय में प्रजुष्ट (उन में प्रीति रखने वाली, उनका सेवन करने वाली, —या उनका प्रीतिपूर्वक सेवन करने वाली) ये इन्द्रियाँ असेवा (असेवन—विषयों का सेवन न करना) से उस प्रकार नियन्त्रित नहीं की जा सकतीं यथा निरन्तर रहने वाले ज्ञान से ।

यस्मादनियमितं मनो विकारस्य हेतुः स्यादत आह—

**वेदास्त्यागश्च यज्ञाश्च नियमाश्च तपांसि च ।**
**न विप्रदुष्टभावस्य सिद्धिं गच्छन्ति कर्हिचित् ॥ ९७ ॥**

वेदा इति ॥ वेदाध्ययनदानयज्ञनियमतपांसि भोगादिविषयसेवासंकल्पशीलिनो न कदाचित्फलसिद्धये प्रभवन्ति ॥ ९७ ॥

९७. अत्यन्त दूषित है भाव जिसके ऐसे (मनुष्य) के लिए वेद, त्याग, यज्ञ, नियम और तप कभी सिद्धि को प्राप्त नहीं होते (फलसिद्धि करने वाले नहीं होते)।

---

प्रजुष्ट = प्र + जुष् + त (क्त)— जुषी प्रीतिसेवनयोः ।

गीता ४.३८—न हि ज्ञानेन सदृशं पवित्रमिह विद्यते ।

जितेन्द्रियस्य स्वरूपमाह—

**श्रुत्वा स्पृष्ट्वा च दृष्ट्वा च भुक्त्वा घ्रात्वा च यो नरः ।**
**न हृष्यति ग्लायति वा स विज्ञेयो जितेन्द्रियः ॥ ९८ ॥**

श्रुत्वेति ॥ स्तुतिवाक्यं निन्दावाक्यं च श्रुत्वा, सुखस्पर्शं दुकूलादि, दुःखस्पर्शं मेषकम्बलादि स्पृष्ट्वा, सुरूपं कुरूपं च दृष्ट्वा, स्वादु अस्वादु च भुक्त्वा, सुरभिमसुरभिं च घ्रात्वा, यस्य न हर्षविषादौ स जितेन्द्रियो ज्ञातव्यः ॥९८॥

९८. सुन कर, स्पर्श करके, देखकर, खाकर, सूँघकर, जो मनुष्य न हृष्ट होता है, न ग्लानि (दुःख) को प्राप्त होता है उसे जितेन्द्रिय जानना चाहिए ।

एकेन्द्रियासंयमोऽपि निवार्यत इत्याह—

**इन्द्रियाणां तु सर्वेषां यद्येकं क्षरतीन्द्रियम् ।**
**तेनास्य क्षरति प्रज्ञा दृतेः पादादिवोदकम् ॥ ९९ ॥**

इन्द्रियाणामिति ॥ सर्वेषामिन्द्रियाणां मध्ये यद्येकमपीन्द्रियं विषयप्रवणं भवति ततोऽस्य विषयान्तरे इन्द्रियान्तरैरपि तत्त्वज्ञानं क्षरति न व्यवतिष्ठते । चर्मनिर्मितोदकपात्रादिवैकेनापि छिद्रेण सर्वस्थानस्थमेवोदकं न व्यवतिष्ठते ॥९९॥

९९. यदि सब इन्द्रियों में एक इन्द्रिय [भी] क्षरित होती है (बहती है, नियन्त्रण से बाहर हो जाती है), उससे इसकी (मनुष्य) प्रज्ञा क्षरित हो जाती है, जैसे दृति (मशक) के एक खुले पाद (चरण, भाग, छिद्र) से जल ।

इन्द्रियसंयमस्य सर्वपुरुषार्थहेतुतां दर्शयति—

**वशे कृत्वेन्द्रियग्रामं संयम्य च मनस्तथा ।**
**सर्वान्संसाधयेदर्थानक्षिण्वन् योगतस्तनुम् ॥ १०० ॥**

वशे कृत्वेति ॥ बहिरिन्द्रियग्राममायत्तं कृत्वा मनश्च संयम्य सर्वान्पुरुषार्थान्

---

९८. गीता ५.२०—

न प्रहृष्येत्प्रियं प्राप्य नोद्विजेत्प्राप्य चाप्रियम् ।
स्थिरबुद्धिरसम्मूढो ब्रह्मविद् ब्रह्मणि स्थितः ॥

९९. क्षरति—इत्यन्तःसारशून्यतामनुसूचकम् ।

सम्यक्साधयेत् । योगत उपायेन स्वदेहमपीडयन्नः सहजसुखी संस्कृतान्नादिकं भुञ्जानो न क्रमेण तं त्यजेत् ॥ १०० ॥

१००. इन्द्रिय-समूह को वश में करके तथा मन को संयत (नियन्त्रित) करके, शरीर को क्षीण न करता हुआ योग से सब अर्थों को सिद्ध कर सकता है (करता है) । (अर्थात् हठयोग ठीक नहीं है—मन का नियन्त्रण ही असली योग है—'योगश्चित्तवृत्तिनिरोधः'—योगदर्शन) ।

**पूर्वां संध्यां जपंस्तिष्ठेत्सावित्रीमार्कदर्शनात् ।**
**पश्चिमां तु समासीनः सम्यगृक्षविभावनात् ॥१०१॥**

पूर्वां संध्यामिति ॥ पूर्वां सन्ध्यां पश्चिमामिति च । 'कालाध्वनोरत्यन्त-संयोगे' (पा. २।३।५) इति द्वितीया । प्रथमसंध्यां सूर्यदर्शनपर्यन्तं सावित्रीं जपंस्तिष्ठेत् । आसनादुत्थाय निवृत्तगतिरेकत्र देशे कुर्यात् । पश्चिमां तु संध्यां सावित्रीं जपन्सम्यङ्नक्षत्रदर्शनपर्यन्तमुपविष्टः स्यात् । अत्र च फलवत्त्वाज्जपः प्रधानं, स्थानासने त्वङ्गे । 'फलवत्संनिधावफलं तदङ्गम्' इति न्यायात् । 'संध्ययोर्वेदविद्विप्रो वेदपुण्येन युज्यते' । ( २।७८ ) 'सहस्रकृत्वस्त्वभ्यस्य' (२।७९) इति पूर्वं जपस्य फलमुक्तम् । मेधातिथिस्तु स्थानासनयोरेव प्राधान्यमाह । संध्याकालश्च मुहूर्तमात्रम् । तदाह योगियाज्ञवल्क्यः—'ह्रासवृद्धी तु सततं दिवसानां यथाक्रमम् । संध्या मुहूर्तमात्रं तु ह्रासे वृद्धौ च सा स्मृता' ॥ १०१ ॥

१०१. पहली अथवा पूर्व दिशा की संध्या के समय (सवेरे की संध्या के समय) सूर्य के दर्शन तक सावित्री को जपता हुआ खड़ा रहे । पिछली या पश्चिम की संध्या के समय (शाम की संध्या के समय) बैठा हुआ [जप करे] ।

**पूर्वां संध्यां जपंस्तिष्ठन्नैशमेनो व्यपोहति ।**
**पश्चिमां तु समासीनो मलं हन्ति दिवाकृतम् ॥१०२॥**

---

१००. 'योगतोऽभिरक्षन्' इत्यस्यान्वयमर्थं करोति । पाठोऽविचार्यम् ।

१०१. प्रभाते आलस्यसंभावनया 'तिष्ठेत्' ।
सायङ्काले श्रान्तिसंभावनया 'समासीनः' ।

पूर्वां संध्यामिति ॥ पूर्वसंध्यायां तिष्ठन् जपं कुर्वाणो निशासंचितं पापं नाशयति । पश्चिमसन्ध्यायां तूपविष्टो जपं कुर्वन्दिवार्जितं पापं निहन्ति । तथापि अपातकमुक्तम् । एतच्चाज्ञानादिकृतपापविषयम् । अतएव याज्ञवल्क्यः—'दिवा वा यदि वा रात्रौ यदज्ञानकृतं भवेत् । त्रिकालसंध्याकरणात्तत्सर्वं विप्रणश्यति' ॥ १०२ ॥

१०२. पूर्व संध्या में खड़ा हुआ जप करता हुआ निशासम्बन्धी (रात के) पाप को दूर कर देता है। पश्चिम [संध्या में] बैठा हुआ [जप करता हुआ] दिन में किये गए मल (पाप) को नष्ट कर देता है।

**न तिष्ठति तु यः पूर्वां नोपास्ते यश्च पश्चिमाम् ।**
**स शूद्रवद् बहिष्कार्यः सर्वस्माद्द्विजकर्मणः ॥१०३॥**

न तिष्ठतीति ॥ यः पुनः पूर्वसंध्यां नानुतिष्ठति पश्चिमां च नोपास्ते । तत्कालविहितं जपादि न करोतीत्यर्थः । स शूद्र इव सर्वस्माद्द्विजातिकर्मणोऽतिथिसत्कारादेरपि बाह्यः कार्यः । अनेनैव प्रत्यवायेन संध्योपासनस्य नित्यता दर्शिता । नित्यत्वेऽपि सर्वदापेक्षितपापक्षयस्य फलत्वमविरुद्धम् ॥ १०३ ॥

१०३. जो पूर्व [संध्या में] खड़ा नहीं होता है जो पश्चिम [संध्या में] उपासना नहीं करता है—सब द्विज-कर्म से शूद्र के समान बहिष्कृत कर दिया जाना चाहिए।

**अपां समीपे नियतो नैत्यकं विधिमास्थितः ।**
**सावित्रीमप्यधीयीत गत्वारण्यं समाहितः ॥ १०४ ॥**

अपां समीप इति ॥ ब्रह्मयज्ञरूपमिदं वेदाध्ययनाशक्तौ सावित्र्यध्ययनमपि विधीयते । अरण्यादिनिर्जनदेशं गत्वा नद्यादिजलसमीपे नियतेन्द्रियः समाहितोऽनन्यमना नैत्यकं विधिं ब्रह्मयज्ञरूपमास्थितोऽनुतिष्ठासुः सावित्रीमपि प्रणवव्याहृतित्रययुतां यथोक्तामधीयीत ॥ १०४ ॥

१०४. अरण्य (निर्जन प्रदेश) में जाकर जलों (जलाशय नदी आदि) के समीप नियतेन्द्रिय (जितेन्द्रिय) हुआ हुआ नित्य की [ब्रह्मयज्ञरूप], विधि को करने को प्रस्तुत [मनुष्य] सावित्री का भी अध्ययन (जप) करे।

**वेदोपकरणे चैव स्वाध्याये चैव नैत्यके ।**
**नानुरोधोऽस्त्यनध्याये होममन्त्रेषु चैव हि ॥१०५॥**

वेदोपकरण इति ॥ वेदोपकरणे वेदाङ्गे शिक्षादौ नैत्यके नित्यानुष्ठेये च स्वाध्याये ब्रह्मयज्ञरूपे होममन्त्रेषु चानध्यायादरो नास्ति ॥ १०५ ॥

१०५. वेदाङ्ग में तथा नित्य के स्वाध्याय में तथा होममन्त्रों में अनध्याय का अनुरोध (आदर) नहीं है (अर्थात् इनमें कभी छुट्टी नहीं)।

**नैत्यके नास्त्यनध्यायो ब्रह्मसत्रं हि तत्स्मृतम् ।**
**ब्रह्माहुतिहुतं पुण्यमनध्यायवषट्कृतम् ॥ १०६ ॥**

नैत्यक इति ॥ पूर्वोक्तनैत्यकस्वाध्यायविषयस्यायमनुवादः । नैत्यके जपयज्ञेऽनध्यायो नास्ति । यतः सततभवत्वात् । ब्रह्मसत्रं तन्मन्वादिभिः स्मृतम् । ब्रह्मैवाहुतिर्ब्रह्माहुतिर्हविस्तया हुतमनध्यायाध्ययनमध्ययनरूपमनध्यायवषट्-कृतमपि पुण्यमेव भवति ॥ १०६ ॥

१०६. नित्य के कार्य में (जपयज्ञ में) अनध्याय नहीं है क्योंकि उसे तो ब्रह्मसत्र कहा गया है। ब्रह्म (वेद) रूपी आहुति से हुत किया गया अनध्यायरूपी वषट् से किया गया [वह ब्रह्मसत्र] पुण्यकारक है।

**यः स्वाध्यायमधीतेऽब्दं विधिना नियतः शुचिः ।**
**तस्य नित्यं क्षरत्येष पयो दधि घृतं मधु ॥ १०७ ॥**

यः स्वाध्यायमिति ॥ अब्दमित्यत्यन्तसंयोगे द्वितीया । यो वर्षमप्येकं स्वाध्यायमक्षरविहितक्रमयुक्तं नियतेन्द्रियः प्रयतो जपति तस्यैव स्वाध्यायो जपयज्ञः क्षीरादीनि क्षरति क्षीरादिभिर्देवान्पितॄंश्च प्रीणाति । ते च प्रीताः

---

१०५. वेदाङ्गानि षट्—शिक्षा कल्पो व्याकरणं छन्दो ज्योतिषं निरुक्तञ्च ।

१०६. ब्रह्माहुतिहुतम्—कुल्लूक—'ब्रह्मैवाहुतिस्तया हुतम्' । अस्माकं मतेन ब्रह्मैवाहुतिस्तया हुतम् । ब्रह्मसत्रम्—ब्रह्म वेदस्तत्पाठरूपं सत्रम् ।

वषट्—देवोद्देश्यकहविस्त्यागमन्त्रः (अमर) ।

अर्थात् अस्मिन् सत्रे ब्रह्माहुतिरनध्यायश्च वषट्कर्म । एवमनध्यायो न करिष्यते ।

सर्वकामैर्जपयज्ञकारिणस्तर्पयन्तीत्यर्थः । अत एव याज्ञवल्क्यः (१।४१)— 'मधुना पयसा चैव स देवांस्तर्पयेद्द्विजः । पितॄन्मधुघृताभ्यां च ऋचोऽधीते हि योऽन्वहम् ॥' इत्युपक्रम्य चतुर्णामेव वेदानां पुराणानां जपस्य च । देवपितृतृप्तिफलमुक्त्वा शेषे 'ते तृप्तास्तर्पयन्त्येनं सर्वकामफलैः शुभैः' (या. स्मृ. १।४७) इत्युक्तवान् ॥ १०७ ॥

१०७. जो एक वर्ष तक जितेन्द्रिय पवित्र हुआ हुआ, विधि से स्वाध्याय को (जपयज्ञ को) पढ़ता है—अर्थात् जप करता है, उसके लिए यह (स्वाध्याय) नित्य दूध, दही, घी, शहद क्षरित करता है ।

**अग्नीन्धनं भैक्षचर्यामधःशय्यां गुरोर्हितम् ।**

**आ समावर्तनात्कुर्यात्कृतोपनयनो द्विजः ॥ १०८ ॥**

अग्नीन्धनमिति ॥ सायंप्रातः समिद्धोमं, भिक्षासमूहाहरणं, अखट्वाशयनरूपामधःशय्यां न तु स्थण्डिलशायित्वमेव, गुरोरुदककुम्भाद्याहरणरूपं हितं कृतोपनयनो ब्रह्मचारी समावर्तनपर्यन्तं कुर्यात् ॥ १०८ ॥

१०८. किया गया है उपनयन जिसका, ऐसा द्विज समावर्तन [संस्कार] पर्यन्त समिद्धोम (पवित्र अग्नि में ईंधन डालना), भिक्षासमूह का लाना, नीचे (भूमि पर) सोना, गुरु के हितकारी कार्य (गुरु सेवा आदि) करे ।

कीदृशः शिष्योऽध्याप्य इत्याह—

**आचार्यपुत्रः शुश्रूषुर्ज्ञानदो धार्मिकः शुचिः ।**

**आप्तः शक्तोऽर्थदः साधुः स्वोऽध्याप्या दश धर्मतः ॥ १०९ ॥**

आचार्यपुत्र इति ॥ आचार्यपुत्रः, परिचारकः, ज्ञानान्तरदाता, धर्मवित्, मृदादिभिः शुचिः, बान्धवः, ग्रहणधारणसमर्थः, धनदाता, हितेच्छुः, ज्ञातिः, इत्येते धर्मेणाध्याप्याः ॥ १०९ ॥

---

१०८. समावर्तन संस्कार—समावर्तते गुरुकुलादनेन । सम आ √वृत् करणे ल्युट् । वेदाध्ययनानन्तरं गार्हस्थ्याय गुरुकुलादागमनहेतुकः संस्कारभेदः ।

'सौम्यभानुजयोर्वारे नक्षत्रे च यथोदिते ।

ताराचन्द्रविशुद्धौ च समावर्तनमिष्यते ॥'

१०९. आचार्य का पुत्र, सेवा करने वाला, ज्ञान देने वाला, धार्मिक, पवित्र, आप्त (बान्धव), समर्थ (ग्रहण-धारण-समर्थ), इष्ट वस्तु देने वाला, सज्जन तथा संबन्धी (रिश्तेदार)—(ये) दस धर्म के अनुसार अध्याप्य (अध्यापनीय, वेदज्ञान देने योग्य) हैं।

**नापृष्टः कस्यचिद्ब्रूयान्न चान्यायेन पृच्छतः ।**
**जानन्नपि हि मेधावी जडवल्लोक आचरेत् ॥ ११० ॥**

नापृष्ट इति ॥ यदन्येनाल्पाक्षरं विस्वरं वाधीतं तदा तत्त्वं न वदेत् । शिष्यस्य त्वपृच्छतोऽपि वक्तव्यम् । भक्तिश्रद्धादिप्रश्नधर्मोल्लङ्घनमन्यायः, तेन पृच्छतो न ब्रूयात् । जानन्नपि हि प्राज्ञो लोके मूक इव व्यवहरेत् ॥११०॥

११०. न पूछा गया किसी को कुछ न कहे (बिना पूछे कोई बात न समझाये)—न-ही अन्याय से पूछने वाले को कहे (उत्तर दे)—जानता हुआ भी मेधावी लोक में जड़ के समान आचरण करे।

उक्तप्रतिषेधव्यतिक्रमे दोषमाह—

**अधर्मेण च यः प्राह यश्चाधर्मेण पृच्छति ।**
**तयोरन्यतरः प्रैति विद्वेषं वाधिगच्छति ॥ १११ ॥**

अधर्मेणेति ॥ अधर्मेण पृष्टोऽपि यो यस्य वदति यश्चान्यायेन यं पृच्छति तयोरन्यतरो व्यतिक्रमकारी म्रियते, विद्वेषं वा तेन सह गच्छति ॥ १११ ॥

१११. जो अधर्म से कहता है, जो अधर्म से पूछता है—उन में एक (व्यति-क्रमकारी) मर जाता है—अथवा विद्वेष को प्राप्त होता है (अर्थात् वे एक-दूसरे के साथ द्वेष करने लगते हैं।)

**धर्मार्थौ यत्र न स्यातां शुश्रूषा वापि तद्विधा ।**
**तत्र विद्या न वप्तव्या शुभं बीजमिवोषरे ॥ ११२ ॥**

धर्मार्थाविति ॥ यस्मिन् शिष्येऽध्यापिते धर्मार्थौ न भवतः परिचर्या वाध्य-यनानुरूपा तत्र विद्या नार्पणीया । सुष्ठु व्रीह्यादिबीजमिवोषरे । यत्र बीजमुप्तं न प्ररोहति स ऊषरः । न चार्थग्रहणे भृतकाध्यापकत्वमाशङ्कनीयम्, यदेता-वन्मह्यं दीयते तदैतावदध्यापयामीति नियमाभावात् ॥ ११२ ॥

११२. जहाँ धर्म और अर्थ न हों या इस प्रकार की (अध्ययन के अनुरूप) शुश्रूषा न हो—वहाँ विद्या नहीं बोनी चाहिए, जिस प्रकार ऊसर में शुभ बीज [नहीं बोना चाहिए] ।

**विद्ययैव समं कामं मर्तव्यं ब्रह्मवादिना ।**
**आपद्यपि हि घोरायां न त्वेनामिरिणे वपेत् ॥ ११३ ॥**

विद्ययेति ॥ विद्ययैव सह वेदाध्यापकेन वरं मर्तव्यं न तु सर्वथाध्यापन-योग्यशिष्याभावे पात्राभावेन तां प्रतिपादयेत् । तथा च छान्दोग्यब्राह्मणम् 'विद्यया सार्धं म्रियेत न विद्यामूषरे वपेत्' ॥ ११३ ॥

११३. भले ही ब्रह्मवादी के द्वारा [अपनी] विद्या के साथ मर जाना चाहिए—अर्थात् अपनी विद्या साथ में ही लिये मर जाए, परन्तु घोर आपत्ति में भी उसे ऊसर में न बोवे ।

अथार्थवादमाह—

**विद्या ब्राह्मणमेत्याह शेवधिष्टेऽस्मि रक्ष माम् ।**
**असूयकाय मां मा दास्तथा स्यां वीर्यवत्तमा ॥ ११४ ॥**

विद्या ब्राह्मणमिति ॥ विद्याधिष्ठात्री देवता कश्चिदध्यापकं ब्राह्मणमाग-त्यैवमवदत् 'तवाहं निधिरस्मि । मां रक्ष । असूयकादिदोषवते न मां वदेः । तथा मत्संरक्षणेन वीर्यवती भूयासम्' । तथा च 'छान्दोग्यब्राह्मणम्—विद्या ह वै ब्राह्मणमाजगाम तवाहमस्मि त्वं मां पालय, अनर्हते मानिने नैव मा दाः, गोपाय मा, श्रेयसी तवाहमस्मि' इति ॥ ११४ ॥

११४. विद्या ब्राह्मण के पास आकर बोली—मैं तेरी निधि हूँ, मेरी रक्षा कर, मुझे असूया करने वाले को मत दे तथा [मैं] वीर्यवत्तमा (सर्वाधिक शक्ति वाली) हो जाऊँ ।

---

११४. असूया—गुणेषु दोषारोपः ।
निरुक्त २.४.१
विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेऽहमस्मि ।
असूयकायानृजवेऽयताय न मा ब्रूया वीर्यवती यथा स्याम् ।

**यमेव तु शुचिं विद्यान्नियतं ब्रह्मचारिणम् ।**

**तस्मै मां ब्रूहि विप्राय निधिपायाप्रमादिने ॥ ११५ ॥**

यमेवेति ॥ यमेव पुनः शिष्यं शुचिं नियतेन्द्रियं ब्रह्मचारिणं जानासि तस्मै विद्यारूपनिधिरक्षकाय प्रमादरहिताय मां वद ॥ ११५ ॥

११५. जिसे पवित्र जितेन्द्रिय ब्रह्मचारी जाने, उस निधि की रक्षा करने वाले अप्रमादी विप्र के लिए ही मुझे कह (मेरा अध्यापन कर) ।

**ब्रह्म यस्त्वननुज्ञातमधीयानादवाप्नुयात् ।**

**स ब्रह्मस्तेयसंयुक्तो नरकं प्रतिपद्यते ॥ ११६ ॥**

ब्रह्मेति ॥ यः पुनरभ्यासार्थमधीयानादन्यं वा कंचिदध्यापयतस्तदनुमति-रहितं वेदं गृह्णाति स वेदस्तेयसंयुक्तो नरकं गच्छति, तस्मादेतन्न कर्तव्यम् ॥११६॥

११६. जो बिना अनुज्ञा लिए पढ़ने वाले से ब्रह्म (वेद, वैदिक ज्ञान) को प्राप्त कर ले, ब्रह्म की चोरी से युक्त वह नरक को प्राप्त होता है ।

**लौकिकं वैदिकं वापि तथाध्यात्मिकमेव च ।**

**आददीत यतो ज्ञानं तं पूर्वमभिवादयेत् ॥११७॥**

लौकिकमिति ॥ लौकिकमर्थशास्त्रादिज्ञानं, वैदिकं वेदार्थज्ञानं, आध्यात्मिकं ब्रह्मज्ञानं, यस्मात् गृह्णाति तं बहुमान्यमध्ये स्थितं प्रथममभिवादयेत् । लौकिकादिज्ञानदातॄणामेव त्रयाणां समवाये यथोत्तरं मान्यत्वम् ॥ ११७ ॥

११७. लौकिक अथवा वैदिक तथा आध्यात्मिक ज्ञान जिससे ग्रहण करे, पहले उसे अभिवादन करे ।

---

११५. प्रथम पङ्क्तौ 'विद्यात्', इति प्रथमपुरुषैकवचनं, द्वितीयपङ्क्तौ च 'ब्रूहि' इति मध्यमपुरुषैकवचनम् । यदि प्रथमपङ्क्तौ 'विद्या नियतम्' इति स्यात्तदा वाक्यच्छन्दोभङ्गोऽपि न भवति । अथवा समाधानमिदं स्यात्—कश्चिदपि विद्यात् । यदि त्वं प्रत्यक्षं नापि जानासि, तथापि ब्रूहि यदि कश्चिदन्यो जानाति ।

**सावित्रीमात्रसारोऽपि वरं विप्रः सुयन्त्रितः ।**
**नायन्त्रितस्त्रिवेदोऽपि सर्वाशी सर्वविक्रयी ॥ ११८ ॥**

सावित्रीति ॥ सावित्रीमात्रवेत्तापि वरं सुयन्त्रितः शास्त्रनियमितो विप्रादिर्मान्यः, नायन्त्रितो वेदत्रयवेत्तापि निषिद्धभोजनादिशीलः प्रतिषिद्धविक्रेता च । एतच्च प्रदर्शनमात्रम् । 'सुयन्त्रित' शब्देन विधिनिषेधनिष्ठत्वस्य विवक्षितत्वात् ॥ ११८ ॥

११८. सावित्रीमात्र सार वाला (अर्थात् जिसने केवल सावित्री पढ़ी है और उसका जप करता है), (परन्तु) सुनियन्त्रित विप्र उत्कृष्टतर (बेहतर) है; तीनों वेदों [को जानने] वाला भी सब-कुछ खाने वाला, सब-कुछ बेचने वाला अनियन्त्रित विप्र [अच्छा] नहीं ।

**शय्यासनेऽध्याचरिते श्रेयसा न समाविशेत् ।**
**शय्यासनस्थश्चैवैनं प्रत्युत्थायाभिवादयेत् ॥ ११९ ॥**

शय्येति ॥ शय्या चासनं च शय्यासनं 'जातिरप्राणिनाम्' (पा. २।४।६) इति द्वन्द्वैकवद्भावः । तस्मिञ्छ्रेयसा विद्याद्यधिकेन गुरुणा चाध्याचरिते साधारण्येन स्वीकृते च तत्कालमपि नासीत । स्वयं च शय्यासनस्थो गुरावागते उत्थायाभिवादनं कुर्यात् ॥ ११९ ॥

११९. [अपने से] उत्कृष्टतर [गुरु आदि] से ग्रहण किये गए शय्या और आसन पर न बैठे । यदि शय्या या आसन पर बैठा हो [तो अपने से उत्कृष्टतर] इस (गुरु आदि को) प्रत्युत्थान करके अभिवादन करे ।

अस्यार्थवादमाह—

**ऊर्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आयति ।**
**प्रत्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिपद्यते ॥ १२० ॥**

ऊर्ध्वमिति ॥ यस्माद्यूनोऽल्पवयसो वयोविद्यादिना स्थविरे आयति आग-

---

११९. प्रत्युत्थान—उठकर किसी की ओर सम्मानपूर्वक जाना—अगवानी करना ।

च्छति सति प्राणा ऊर्ध्वं उत्क्रामन्ति देहाद्बहिर्निर्गन्तुमिच्छन्ति तान्वृद्धस्य प्रत्यु-त्थानाभिवादाभ्यां पुनः सुस्थान्करोति । तस्माद् वृद्धस्य प्रत्युत्थानाभिवादने कुर्यात् ॥ १२० ॥

१२०. [आयु, विद्या आदि से] वृद्ध के आते हुए होने पर युवक के प्राण ऊपर की ओर उठते हैं (देह से बाहर जाने को होते हैं), [वह] प्रत्युत्थान और अभिवादन से उन्हें फिर प्राप्त करता है (सुस्थ, सुप्रतिष्ठित करता है)

इतश्च फलमाह—

**अभिवादनशीलस्य नित्यं वृद्धोपसेविनः ।**

**चत्वारि संप्रवर्धन्ते आयुर्विद्या यशो बलम् ॥ १२१ ॥**

अभिवादनशीलस्येति ॥ उत्थाय सर्वदा वृद्धाभिवादनशीलस्य वृद्धसेवि-नश्च आयुः-प्रज्ञा-यशो-बलानि चत्वारि सम्यक् प्रकर्षेण वर्धन्ते ॥ १२१ ॥

१२१. अभिवादन शील वाले, नित्य वृद्धों का उपसेवन (सेवा, संगति) करने वाले के चार खूब बढ़ते हैं आयु, विद्या, यश [और] बल ।

सप्रत्यभिवादनविधिमाह—

**अभिवादात्परं विप्रो ज्यायांसमभिवादयन् ।**

**असौ नामाहमस्मीति स्वं नाम परिकीर्तयेत् ॥ १२२ ॥**

अभिवादात्परमिति ॥ वृद्धमभिवादयन् विप्रादिरभिवादात्परं 'अभिवादये' इति शब्दोच्चारणानन्तरम् 'अमुकनामाहमस्मि' इति स्वं नाम परिकीर्तयेत् । असौ नामशब्दस्य विशेषपरत्वात्स्वनामविशेषोच्चारणानन्तरमभिवादनवाक्ये नामशब्दोऽपि प्रयोज्य इति मेधातिथि-गोविन्दराजयोरभिधानमप्रमाणम् । अत एव गौतमः—(६।१) 'स्वनाम प्रोच्याहमभिवादय इत्यभिवदेत्' । नाश्वलायनो-ऽपि 'असावहं भो इत्यात्मनो नामादिशेत्' इत्युक्तवान् । यदि च नामशब्दश्रवणा-त्तस्य प्रयोगस्तदा 'अकारश्चास्य नाम्नोऽन्ते' (२।१२५) इत्यभिधानात्प्रत्यभि-वादनवाक्ये नामशब्दोच्चारणं स्यान्न च तत्कस्यचित्सम्मतम् ॥ १२२ ॥

१२२. अपने से बड़े का अभिवादन करता हुआ विप्र अभिवादन के बाद 'यह नाम वाला मैं हूँ', इस प्रकार अपना नाम कीर्तित करे (कहे) ।

'वाक्यस्य टेः प्लुत उदात्तः' (८।२।८२) इत्यस्यानुवृत्तौ 'प्रत्यभिवादेऽशूद्रे' (८।२।८३) इति प्लुतं स्मरन्पाणिनिः स्फुटमुक्तवान्। व्याख्यातं च वृत्तिकृता वामनेन—'टेरिति किम्, व्यञ्जनान्तस्यैव टेः प्लुतो यथा स्यात्' इति। तस्मादीदृशं प्रत्यभिवादनवाक्यं 'आयुष्मान्भव सौम्य शुभशर्मन्', एवं क्षत्रियस्य 'बलवर्मन्', एवं वैश्यस्य 'वसुभूते'। 'प्लुतो राजन्यविशां वा' (वा. ४८९५) इति कात्यायनवचनात्क्षत्रियवैश्ययोः पक्षे प्लुतो न भवति। शूद्रस्य प्लुतो न कार्यः, '—अशूद्रे' (८।२।८३) इति पाणिनिवचनात्। 'स्त्रियामपि निषेधः' (वा. ४८९४) इति कात्यायनवचनात्स्त्रियामपि प्रत्यभिवादनवाक्ये न प्लुतः। गोविन्दराजस्तु ब्राह्मणस्य नाम्नि शर्मोपपदं नित्यं प्रागभिधाय प्रत्यभिवादनवाक्ये 'आयुष्मान् भव सौम्य भद्र' इति निरुपपदोदाहरणसोपपदोदाहरणानभिज्ञत्वमेव निजं ज्ञापयति। धरणीधरोऽपि 'आयुष्मान् भव सौम्य' इतिसंबुद्धिविभक्त्यन्तं मनुवचनं पश्यन्नप्यसंबुद्धिप्रथमैकवचनान्तममुकशर्मेत्युदाहरन्विचक्षणैरप्युपेक्षणीय एव ॥ १२५ ॥

१२५. अभिवादन करने पर विप्र 'आयुष्मान् हो सौम्य' इस प्रकार कहा जाना चाहिए। और नाम के अन्त में अकार (अकारादि स्वर) प्लुत कहा जाना चाहिए (तथा व्यञ्जनान्त शब्दों का पहला अक्षर (स्वर) [प्लुत कहा जाना चाहिए]

**यो न वेत्त्यभिवादस्य विप्रः प्रत्यभिवादनम्।**
**नाभिवाद्यः स विदुषा यथा शूद्रस्तथैव सः ॥ १२६ ॥**

यो न वेत्तीति ॥ यो विप्रोऽभिवादनस्यानुरूपं प्रत्यभिवादनं न जानात्यसावभिवादनविदुषापि स्वनामोच्चारणाद्युक्तविधिना शूद्र इव नाभिवाद्यः। 'अभिवादयेऽहम्' इति शब्दोच्चारणमात्रं तु चरणग्रहणादिशून्यमनिषिद्धम्। प्रागुक्तत्वात् ॥ १२६ ॥

१२६. जो विप्र अभिवादन के प्रत्यभिवादन को नहीं जानता, विद्वान् के द्वारा वह अभिवादन नहीं किया जाना चाहिए, क्योंकि वह जैसा शूद्र, वैसा ही है (शूद्र के समान है)।

**ब्राह्मणं कुशलं पृच्छेत्क्षत्रबन्धुमनामयम् ।**
**वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव च ॥ १२७ ॥**

ब्राह्मणमिति ॥ समागम्य समागमे कृते अभिवादकमवरवयस्कं समानवयस्कमनभिवादकमपि ब्राह्मणं कुशलं क्षत्रियमनामयं, वैश्यं क्षेमं, शूद्रमारोग्यं पृच्छेत् । अत एवापस्तम्बः—'कुशलमवरवयसं समानवयसं वा विप्रं पृच्छेत्, अनामयं क्षत्रियं, क्षेमं वैश्यं, आरोग्यं शूद्रम् । अवरवयसमभिवादकं समानवयसमनभिवादकमपीति' मन्वर्थमेवापस्तम्बः स्फुटयति स्म । गोविन्दराजस्तु प्रकरणात्प्रत्यभिवादकस्यैव कुशलादिप्रश्नमाह । तन्न; अभिवादनेन सह समागमस्यानुपात्तत्वात् । समागम्येति निष्प्रयोजनानुवादप्रसङ्गात् । अतः कुशलक्षेमशब्दयोरनामयारोग्यशब्दयोश्च समानार्थत्वाच्छब्दविशेषोच्चारणमेव विवक्षितम् ॥ १२७ ॥

१२७. मिलकर (मिलने पर) ब्राह्मण से कुशल पूछे, क्षत्रिय से नीरोगता, वैश्य से क्षेम और शूद्र से आरोग्य ।

**अवाच्यो दीक्षितो नाम्ना यवीयानपि यो भवेत् ।**
**भोभवत्पूर्वकं त्वेनमभिभाषेत धर्मवित् ॥ १२८ ॥**

अवाच्य इति ॥ प्रत्यभिवादनकाले अन्यदा च दीक्षणीयातः प्रभृत्यावभृथस्नानात्कनिष्ठोऽपि दीक्षितो नाम्ना न वाच्यः, किन्तु भोभवच्छब्दपूर्वकं दीक्षितादिशब्दैरुत्कर्षाभिधायिभिरेव धार्मिकोऽभिभाषेत—'भो दीक्षित, इदं कुरु, भवता यजमानेन इदं क्रियताम्' इति ॥ १२८ ॥

---

१२७. कुशलम्—कल्याणम् । √कुश् इतो वृषादित्वात् कलन् । अथवा कुं पापं तस्मात् शलति गच्छति पृथक्त्वं प्राप्नोतीत्यर्थः ।

आमयम्—आमं तापं रुग्णावस्थां वा आत्मनेत्यामयः ।

आमयस्याभावः—अनामयम् ।

क्षेमः—क्षि+मन् (उणादि १-१३९) कल्याणम् ।

आरोग्यम्—अरोगस्य भावः (ष्यञ्) ।

१२८. दीक्षित को नाम से नहीं पुकारा जाना चाहिए, भले ही वह छोटा हो; धर्म को जानने वाला इनसे 'भोः' या 'भवत्'पूर्वक ('भोः' या 'भवत्' शब्दों के प्रयोग के साथ) बातचीत करे।

**परपत्नी तु या स्त्री स्यादसंबन्धा च योनितः ।**
**तां ब्रूयाद्भवतीत्येवं सुभगे भगिनीति च ॥ १२९ ॥**

परपत्नी त्विति ॥ या स्त्री परपत्नी भवति, असंबन्धा च योनित इति स्वस्रादिर्न भवति तामनुपयुक्तसंभाषणकाले 'भवति, सुभगे भगिनि' इति वा वदेत्। 'परपत्नी'ग्रहणात् कन्यायां नैष विधिः। स्वसुः कन्यादेस्तु 'आयुष्मती'त्यादिशब्दैरभिभाषणम् ॥ १२९ ॥

१२९. दूसरे की पत्नी तथा जो स्त्री योनि से (अपने से) सम्बन्ध रखने वाली न हो उसे 'भवति, सुभगे और भगिनि' इस प्रकार पुकारे।

**मातुलांश्च पितृव्यांश्च श्वशुरानृत्विजो गुरून् ।**
**असावहमिति ब्रूयात्प्रत्युत्थाय यवीयसः ॥१३०॥**

मातुलांश्चेति ॥ मातुलादीनागतान्कनिष्ठानासनादुत्थाय 'असावहम्' इति वदेत् नाभिवादयेत्। असाविति स्वनामनिर्देशः, 'भूयिष्ठाः खलु गुरवः' इत्युपक्रम्य ज्ञानवृद्धतपोवृद्धयोरपि हारीतेन गुरुत्वकीर्तनात्कनिष्ठयोरपि संभवात्तद्विषयोऽयं 'गुरु'शब्दः ॥ १३० ॥

१३०. आयु में छोटे [भी] मामाओं, चाचाओं, ससुरों, ऋत्विजों (पुरोहितों) तथा गुरुओं को प्रत्युत्थान करके 'वह मैं हूँ' इस प्रकार कहे।

---

१२८. दीक्षित—श्रौत यज्ञ के लिए जिसने अवभृथ स्नान किया है। दीक्षा जाताऽस्य। अथवा दीक्ष् कर्तरि क्तः। सोमपानविशिष्टयागकर्ता। अथवा गुरुमुखाद् गृहीतमन्त्रः। दीक्षा—यजनम्, पूजनम्, व्रतसंग्रहः—(हेमचन्द्रः)। गुरुमुखात्स्वेष्टदेवमंत्रग्रहणम्।

ददाति दिव्यतां यावत् क्षिणुयात् पापसन्ततिम् ।
तेन दीक्षेति विख्याता मुनिभिस्तन्त्रपारगैः ॥—गौतमीयतन्त्रम्, ७.२

१२९. योनितः असंबन्धा—बहिन इत्यादि।

**मातृष्वसा मातुलानी श्वश्रूश्च पितृष्वसा ।**
**संपूज्या गुरुपत्नीवत्समास्ता गुरुभार्यया ॥ १३१ ॥**

मातृष्वसेति ॥ मातृष्वसादयो गुरुपत्नीवत्प्रत्युत्थानाभिवादनासनदानादिभिः संपूज्याः । अभिवादनप्रकरणादभिवादनमेव संपूजनं विज्ञायत इति समास्ता इत्यवोचत् । गुरुभार्यासमानत्वात्प्रत्युत्थानादिकमपि कार्यमित्यर्थः ॥

१३१. मासी, मामी, सास, बुआ, गुरुपत्नी के समान संपूज्य हैं; वे गुरुपत्नी के समान हैं ।

**भ्रातुर्भार्योपसंग्राह्या सवर्णाऽहन्यहन्यपि ।**
**विप्रोष्य तूपसंग्राह्या ज्ञातिसंबन्धियोषितः ॥ १३२ ॥**

भ्रातुर्भार्येति ॥ भ्रातुः सजातीया भार्या ज्येष्ठा पूजाप्रकरणादुपसंग्राह्या पादयोरभिवाद्या । अहन्यहनि प्रत्यहमेव । अपिरेवार्थे । ज्ञातयः पितृपक्षाः पितृव्यादयः, संबन्धिनो मातृपक्षाः श्वशुरादयश्च, तेषां पत्न्यः पुनर्विप्रोष्य प्रवासात्प्रत्यागतेनैवाभिवाद्याः, न तु प्रत्यहं नियमः ॥ १३२ ॥

१३२. भाई की सजातीय भार्या प्रतिदिन ही चरणों में अभिवादनीय है । ज्ञातियों से सम्बन्ध वाली स्त्रियाँ प्रवास से लौटने पर चरणों में अभिवादनीय हैं ।

**पितुर्भगिन्यां मातुश्च ज्यायस्यां च स्वसर्यपि ।**
**मातृवद्वृत्तिमातिष्ठेन्माता ताभ्यो गरीयसी ॥१३३॥**

पितुर्भगिन्यामिति ॥ पितुर्मातुश्च भगिन्यां ज्येष्ठायां चात्मनो भगिन्यां मातृवद्वृत्तिमातिष्ठेत् । माता पुनस्ताभ्यो गुरुतमा । ननु 'मातृष्वसा मातुलानी' (२।१३१) इत्यनेनैव गुरुपत्नीवत्पूज्यत्वमुक्तं किमधिकमनेन बोध्यते ? उच्यते—इदमेव 'माता ताभ्यो गरीयसी' इति । तेन पितृष्वस्रानुज्ञायां दत्तायां माता च विरोधे मातुराज्ञानुष्ठेयेति; अथवा पूर्वं पितृष्वस्रादेर्मातृवत्पूज्यत्वमुक्तम् । अनेन तु स्नेहादिवृत्तिरप्यतिदिश्यत इत्यपुनरुक्तिः ॥ १३३ ॥

---

१३२. ज्ञाति-पिता और माता के पक्ष के रिश्तेदार चाचा, नाना इत्यादि ।

१३३. पिता की बहन में तथा माता की बड़ी बहन में माता के समान वृत्ति रखो। माता उनसे बड़ी है। भाव यह है कि इन सबका सम्मान करे। पर माँ इनसे बड़ी है अर्थात् तुलना का अवसर आ पड़े तो माँ की आज्ञा-सेवादि इन सबसे अधिक महत्त्वपूर्ण समझो।

**दशाब्दाख्यं पौरसख्यं पञ्चाब्दाख्यं कलाभृताम्।**
**त्र्यब्दपूर्वं श्रोत्रियाणां स्वल्पेनापि स्वयोनिषु ॥१३४॥**

दशाब्दाख्यमिति ॥ दश अब्दा आख्या यस्य तद्दशाब्दाख्यं पौरसख्यम्। अयमर्थः—एकपुरवासिनां वक्ष्यमाणविद्यादिगुणरहितानामेकस्य दशभिरब्दैर्ज्येष्ठत्वे सत्यपि सख्यमाख्यायते। 'पुर' ग्रहणं प्रदर्शनार्थं, तेनैकग्रामादिनिवासिनामपि स्यात्। गीतादिकलाभिज्ञानां पञ्चवर्षपर्यन्तं सख्यं, श्रोत्रियाणां त्र्यब्दपर्यन्तं, सपिण्डेष्वल्पेनैव कालेन सह सख्यम्। अभिरवाणि। सर्व-त्राल्पकालादूर्ध्वं ज्येष्ठव्यवहारः ॥ १३४ ॥

१३४. [एक ही] नगर में रहने वालों का सख्य दस वर्ष का कहा गया है, गीतादिकलाभिज्ञों का पाँच वर्ष का कहा गया है, श्रोत्रियों का तीन वर्ष तक का, सपिण्डों का अत्यन्त थोड़े काल का भी।

**ब्राह्मणं दशवर्षं तु शतवर्षं तु भूमिपम्।**
**पितापुत्रौ विजानीयाद् ब्राह्मणस्तु तयोः पिता ॥ १३५ ॥**

ब्राह्मणमिति ॥ दशवर्षं ब्राह्मणं, शतवर्षं पुनः क्षत्रियं पितापुत्रौ विजानीयात्। तयोर्मध्ये दशवर्षोऽपि ब्राह्मण एव क्षत्रियस्य शतवर्षस्यापि पिता। तस्मात्पितृवदसौ तस्य मान्यः ॥ १३५ ॥

---

१३३. जननी जन्मभूमिश्च स्वर्गादपि गरीयसी।

१३४. भाव यह है कि हमारे नगर में जो रहता है यदि हम से आयु में दस वर्ष बड़ा भी हो तो हमारा उसका संबन्ध मित्रता का माना जायगा। परन्तु गीतादिकलाभिज्ञों के साथ हमारा मित्रता का संबन्ध तभी माना जायगा जब कि वे ५ वर्ष तक बड़े हों। उससे बड़े हों तो उन्हें बुजुर्ग मानें। इसी प्रकार आगे समझना चाहिए।

१३५. दस वर्ष के ब्राह्मण को तथा सौ वर्ष के राजा को पिता-पुत्र जानो। इन दोनों में ब्राह्मण ही पिता है [चाहे उसकी आयु कुछ भी हो]।

**वित्तं बन्धुर्वयः कर्म विद्या भवति पञ्चमी ।**

**एतानि मान्यस्थानानि गरीयो यद्यदुत्तरम् ॥ १३६ ॥**

वित्तमिति ॥ वित्तं न्यायार्जितं धनं, बन्धुः पितृव्यादिः, वयोऽधिकवयस्कता, कर्म श्रौतं स्मार्तं च, विद्या वेदार्थतत्त्वज्ञानं, एतानि पञ्च मान्यत्वकारणानि । एषां मध्ये यद्यदुत्तरं तत्तत्पूर्वस्माच्छ्रेष्ठमिति बहुमान्यमेतच्च बलाबलसूचनम् ॥ १३६ ॥

१३६. न्यायार्जित धन, बन्धु, आयु, कर्म और पाँचवीं विद्या—ये सम्मान या आदर के स्थान हैं—[इन में भी] बाद बाद का अधिक बड़ा है।

**पञ्चानां त्रिषु वर्णेषु भूयांसि गुणवन्ति च ।**

**यत्र स्युः सोऽत्र मानार्हः शूद्रोऽपि दशमीं गतः ॥१३७॥**

पञ्चानामिति ॥ त्रिषु वर्णेषु ब्राह्मणादिषु पञ्चानां वित्तादीनां मध्ये यत्र पुरुषे पूर्वमप्यनेकं भवति, स एवोत्तरस्मादपि मान्यः । तेन वित्तबन्धुयुक्तो वयोधिकान्मान्यः । एवं वित्तादित्रययुक्तः कर्मवतो मान्यः । वित्तादिचतुष्टययुक्तो विदुषो मान्यः । गुणवन्ति चेति प्रकर्षवन्ति । तेन द्वयोरेव वित्तादित्वे प्रकर्षो मानहेतुः । शूद्रोऽपि दशमीमवस्था नवत्यधिका गतो द्विजन्मनामपि मानार्हः । शतवर्षाणां दशधा विभागे दशम्यवस्था नवत्यधिका भवति ॥१३७॥

१३७. तीनों वर्णों (ब्राह्मण, क्षत्रिय, वैश्य) में, [इन] पाँचों में अधिक और गुण वाला जहाँ हो, वह [अपेक्षाकृत, अधिक] मान के योग्य है। दसवें

---

१३६. अयं श्लोकोऽर्वाचीनः । आर्याणां निर्धनत्वसमुच्चयादिकं प्रकटयत्यवम् ।

[स्नातक] को प्राप्त हुआ-हुआ, अर्थात् ९० वर्ष से अधिक आयु का, शूद्र भी [अपेक्षाकृत अधिक] मान के योग्य है ।

अथापि पूजाप्रकारः प्रसङ्गादुच्यते—

**चक्रिणो दशमीस्थस्य रोगिणो भारिणः स्त्रियाः ।**
**स्नातकस्य च राज्ञश्च पन्था देयो वरस्य च ॥ १३८ ॥**

चक्रिण इति ॥ चक्रयुक्तरथादियानारूढस्य, नवत्यधिकवयसः, रोगार्तस्य, भारवाहिनस्य, स्त्रियाः, अचिरनिवृत्तसमावर्तनस्य, देशाधिपस्य, विवाहाय प्रस्थितस्य पन्थास्त्यक्तव्यः । मार्गापसरणमस्य दद्यादेतेन चतुर्थी ॥ १३८ ॥

१३८. चक्री (चक्र से युक्त रथ आदि पर आरूढ़), ९० से अधिक आयु के स्थित, रोगी, जिसने भार उठा रखा है, स्त्री, स्नातक, राजा तथा वर को मार्ग दिया जाना चाहिए, अर्थात् जब इनमें से कोई आ रहा हो तो रास्ता छोड़ कर एक ओर खड़ा हो जाए ।

**तेषां तु समवेतानां मान्यौ स्नातकपार्थिवौ ।**
**राजस्नातकयोश्चैव स्नातको नृपमानभाक् ॥ १३९ ॥**

तेषामिति ॥ तेषामेकत्र मिलितानां देशाधिपस्नातकौ मान्यौ । राजस्नातकयोरपि स्नातक एव राजापेक्षया मान्यः । अतो 'राज' शब्दोऽत्र पूर्वश्लोके न केवलक्षत्रियवचनः । क्षत्रियजात्यपेक्षया 'ब्राह्मणं दशवर्षं तु' (२।१३५) इत्यनेन ब्राह्मणस्यैव मान्यत्वाभिधानात् स्नातकग्रहणवैयर्थ्याच्च ॥ १३९ ॥

---

१३७. अत्र कुल्लूकेन य आशयः प्रकटीकृतो न वयं तमनुमोदामहे । पूर्वतरश्लोके कथितं 'गरीयो यद्यदुत्तरम्' इति । एतदनुसृत्य वयो वित्त-बन्धुभ्यां गरीयो गुणवत्तरं वा । अतः कुल्लूकस्येदं कथनं 'वित्तबन्धुयुक्तो वयोऽधिकान्मान्य' इत्यादि न साधु । इति तु केवलं 'भूयांसि' इत्यनुसारि । 'गुणवन्ति' इत्यस्यानेन सार्धमेव विचारणीयम् । यतोऽभवमपि स्थाने मानार्ह-तरः । अनेन वित्तविद्यावान् मनुष्यः केवलं विद्यावत उत्कृष्टतरो न भविष्यति, परन्तु वित्तबन्धुवान् केवलं विद्यावत उत्कृष्टतरं न भविष्यति । अतः दशमी-स्थः सर्वेऽपि मानार्हतमः—तात्पर्यमिदं यत् वयस्यनन्तरं वय एव मानार्हतमम् ।

१३९. इकट्ठे हुए हुए इनमें स्नातक और राजा मान्य हैं। राजा और स्नातक में भी स्नातक राजा से अधिक मान का भागी है।

आचार्यादिशब्दार्थमाह—

उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः।
सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ॥ १४० ॥

उपनीयेति ॥ तैः शब्दैरिह शास्त्रे प्राचां व्यवहारात्। यो ब्राह्मणः शिष्यमुपनीय कल्परहस्यसहितां वेदशाखां सर्वामध्यापयति तमाचार्यं पूर्वे मुनयो वदन्ति। कल्पो यज्ञविद्या, रहस्यमुपनिषत्। वेदत्वेऽप्युपनिषदां प्राधान्यविवक्षया पृथङ्निर्देशः ॥१४० ॥

१४०. जो द्विज उपनयन करके शिष्य को यज्ञविद्या के साथ तथा उपनिषत् के साथ वेद पढ़ावे उसे आचार्य कहते हैं।

एकदेशं तु वेदस्य वेदाङ्गान्यपि वा पुनः।
योऽध्यापयति वृत्त्यर्थमुपाध्यायः स उच्यते ॥ १४१ ॥

एकदेशमिति ॥ वेदस्यैकदेशं मन्त्रं ब्राह्मणं च वेदरहितानि व्याकरणादीन्यङ्गानि यो वृत्त्यर्थमध्यापयति स उपाध्याय उच्यते ॥ १४१ ॥

१४१. वेद के एक भाग को अथवा वेदाङ्गों को जो वृत्ति के लिए पढ़ाता है, वह उपाध्याय कहलाता है।

निषेकादीनि कर्माणि यः करोति यथाविधि।
संभावयति चान्नेन स विप्रो गुरुरुच्यते ॥ १४२ ॥

---

१४०. आचार्य—आचार्यः कस्मात्?
आचारं ग्राहयत्याचिनोत्यर्थानाचिनोति बुद्धिमिति वा।—निरुक्तम् १.४.
१४१. अवेदमपवेदं यद् यो वृत्त्यर्थं पाठयति स आचार्यपदभाक् कदाचिदपि न भवति।
कालिदासो मालविकाग्निमित्रे—
यस्यागमः केवलजीविकायै तं ज्ञानपण्यं वणिजं वदन्ति

निषेकादीनीति ॥ निषेको गर्भाधानं, तेन पितुरयं गुरुत्वोपदेशः । गर्भाधानादीनि संस्कारकर्माणि पितुरुपदिष्टानि यथाशास्त्रं यः करोति, अन्नेन च संवर्धयति स विप्रो गुरुरुच्यते ॥ १४२ ॥

१४२. जो यथाविधि गर्भाधान इत्यादि कर्म करता है और अन्न से [शिशु को] बढ़ाता है वह विप्र गुरु कहलाता है।

अग्न्याधेयं पाकयज्ञानग्निष्टोमादिकान्मखान् ।
यः करोति वृतो यस्य स तस्यर्त्विगिहोच्यते ॥ १४३ ॥

अग्न्याधेयमिति ॥ आहवनीयाद्यग्न्युत्पादकं कर्माग्न्याधेयं, अष्टकादीन्पाकयज्ञान्, अग्निष्टोमादींश्च यज्ञान्वृतवरणो यस्य करोति स तस्यर्त्विगिह शास्त्रेऽभिधीयते । ब्रह्मचारिधर्मेष्वनुपयुक्तमप्यृत्विग्लक्षणमाचार्यादिवदृत्विजोऽपि मान्यत्वं दर्शयितुं प्रसङ्गादुक्तम् ॥ १४३ ॥

१४३. अग्न्याधेय, पाकयज्ञ, अग्निष्टोम इत्यादि यज्ञ, वरण किया हुआ जो जिसके लिए करता है वह उसका ऋत्विक् कहलाता है।

य आवृणोत्यवितथं ब्रह्मणा श्रवणावुभौ ।
स माता स पिता ज्ञेयस्तं न द्रुह्येत्कदाचन ॥ १४४ ॥

य आवृणोतीति ॥ य उभौ कर्णौ अवितथमिति वर्णस्वरवैगुण्यरहितेन सत्येन वेदेनापूरयति स माता पिता च ज्ञेयः । महोपकारकत्वगुणयोगादध्यापको मातापितृशब्दाभ्यामुक्तं नापकुर्यात् । कदाचनेति गृहीते वेदे ॥ १४४ ॥

---

१४२. गुरु:—सम्माननीयः । [अत्र] पिता ।

१४३. अग्न्याधेय:—अग्निराधेयो यत्र ।

पाकयज्ञ—पाकसाध्यो यज्ञः । चरुपाकेन कर्तव्य यज्ञभेदः । न च यज्ञो वृषोत्सर्गादि होमः । 'ब्रह्मयज्ञादन्ये पञ्चमहायज्ञान्तर्गता वश्वदेवहोमबलिकर्म-नित्यश्राद्धातिथिभोजनात्मकाश्चत्वारः पाकयज्ञाः ।'

अग्निष्टोमः—अग्नेः स्तोमः स्तुतिसाधनं गुणसमुदायोऽस्मिन्नत्र । अथवा अग्नीनां स्तोमः । यागविशेषः ।

**कामान्माता पिता चैनं यदुत्पादयतो मिथः ।**
**संभूतिं तस्य तां विद्याद्यद्योनावभिजायते ॥ १४७ ॥**

कामादिति ॥ मातापितरौ यदेनं बालकं कामवशेनान्योन्यमुत्पादयतः संभवमात्रं तत्तस्य पश्वादिसाधारणम् । यद्योनौ मातृकुक्षावभिजायतेऽङ्गप्रत्यङ्गानि लभते ॥ १४७ ॥

१४७. माता और पिता परस्पर काम से (काम के वश होकर) जो पैदा करते हैं, जो योनि (मातृ-कुक्षि) में पैदा होता है, उसे (केवल) उस का (शिशु का) पैदा होना जाने ।

**आचार्यस्त्वस्य यां जातिं विधिवद्वेदपारगः ।**
**उत्पादयति सावित्र्या सा सत्या साऽजरामरा ॥ १४८ ॥**

आचार्य इति ॥ आचार्यः पुनर्वेदज्ञोऽस्य माणवकस्य यां जातिं जन्म विधिवत्सावित्र्येति साङ्गोपनयनपूर्वकसावित्र्यनुवचनेनोत्पादयति सा जातिः सत्या अजरामरा च । ब्रह्मप्राप्तिफलत्वात् । उपनयनपूर्वकस्य वेदाध्ययनतदर्थज्ञानानुष्ठानैर्निष्कामस्य मोक्षलाभात् ॥ १४८ ॥

१४८. वेद में पारङ्गत आचार्य इस (शिशु के) जिस जन्म को सावित्री के द्वारा पैदा करता है वह (जन्म) अजर और अमर है ।

**अल्पं वा बहु वा यस्य श्रुतस्योपकरोति यः ।**
**तमपीह गुरुं विद्याच्छ्रुतोपक्रियया तया ॥ १४९ ॥**

अल्पं वेति ॥ श्रुतस्य श्रुतेनेत्यर्थः । उपाध्यायो यस्य शिष्यस्याल्पं वा बहु वा कृत्वा श्रुतेनोपकरोति तमपीह शास्त्रे तस्य गुरुं जानीयात् । श्रुतमेवोपक्रिया, तया श्रुतोपक्रियया ॥ १४९ ॥

१४९. जो जिसके [वेद] ज्ञान में अल्प या अधिक उपकार करता है उसको भी यहाँ [वेद] ज्ञान (देने रूपी) उपकार के कारण से गुरु जाने ।

**ब्राह्मस्य जन्मनः कर्ता स्वधर्मस्य च शासिता ।**
**बालोऽपि विप्रो वृद्धस्य पिता भवति धर्मतः ॥ १५० ॥**

ब्राह्मस्येति ॥ ब्रह्मग्रहणार्थं जन्म ब्राह्ममुपनयनम् । स्वधर्मस्य शासिता

वेदार्थव्याख्याता तादृशोऽपि बालो वृद्धस्य ज्येष्ठस्य पिता भवति । धर्मत इति पितृधर्मास्तस्मिन्ननुष्ठातव्या ॥ १५० ॥

१५०. ब्रह्म (वेद, ज्ञान) संबन्धी जन्म का करने वाला और स्वधर्म का अध्यापन करने वाला बाल विप्र भी धर्म से वृद्ध का पिता होता है ।

प्रकृतानुरूपार्थवादमाह—

**अध्यापयामास पितॄञ्छिशुराङ्गिरसः कविः ।**
**पुत्रका इतिहोवाच ज्ञानेन परिगृह्य तान् ॥ १५१ ॥**

अध्यापयामासेति ॥ अङ्गिरसः पुत्रो बालः कविर्विद्वान् पितृव्यान् पितृव्यपुत्रादीनधिकवयसोऽध्यापितवान् । तान्ज्ञानेन परिगृह्य शिष्यान्कृत्वा 'पुत्रकाः' इति आजुहाव । इतिह इत्यव्ययं पुरावृत्तसूचनार्थम् ॥ १५१ ॥

१५१. विद्वान्, अङ्गिरस् के पुत्र ने (=अङ्गिरस् के विद्वान् पुत्र ने) पिताओं को (पिता के समान आयु वालों को) पढ़ाया । उनको [वह] ज्ञान से [शिष्यों के रूप में] स्वीकार करके, 'हे छोटे पुत्रों', कहता था ।

**ते तमर्थमपृच्छन्त देवानागतमन्यवः ।**
**देवाश्चैतान्समेत्योचुर्न्याय्यं वः शिशुरुक्तवान् ॥ १५२ ॥**

ते तमर्थमपृच्छन्तेति ॥ ते पितृतुल्याः 'पुत्रकाः' इत्युक्ता अनेन जातकोपाः 'पुत्रक' शब्दार्थं देवान्पृष्टवन्तः । देवाश्च पृष्टा मिलित्वा एतानवोचन्—युष्मा-न्यच्छिशुः 'पुत्र' शब्देनोक्तवांस्तद्युक्तम् ॥ १५२ ॥

१५२. आ गया है क्रोध जिन को ऐसे उन्होंने देवों से इस बारे में पूछा [कि यह हमें 'छोटे पुत्रो' कहता है] । और देवों ने इकट्ठा होकर इनको कहा—[इसने] "तुम्हें शिशु ठीक ही कहा ।"

**अज्ञो भवति वै बालः पिता भवति मन्त्रदः ।**
**अज्ञं हि बालमित्याहुः पितेत्येव तु मन्त्रदम् ॥ १५३ ॥**

अज्ञ इति ॥ वैशब्दोऽवधारणे । अज्ञ एव बालो भवति न त्वल्पवयाः । मन्त्रदः पिता भवति । 'मन्त्र'ग्रहणं वेदोपलक्षणार्थम् । यो वेदमध्यापयति व्याचष्टे च

पिता । अत्रैव हेतुमाह—यस्मात्पूर्वेऽपि मुनयोऽज्ञं बालमित्यूचुः, मन्त्रदं च पितेत्येवाब्रुवन्नित्याह ॥ १५३ ॥

१५३. ज्ञानरहित ही बच्चा होता है, मन्त्र देने वाला ही पिता होता है। ज्ञान-रहित को ही बच्चा, [तथा] केवल मन्त्र [वेद ज्ञान] देने वाले को ही पिता, इस प्रकार कहते हैं।

**न हायनैर्न पलितैर्न वित्तेन न बन्धुभिः ।**
**ऋषयश्चक्रिरे धर्मं योऽनूचानः स नो महान् ॥ १५४ ॥**

न हायनैरिति ॥ न बहुभिर्वर्षैः, न केशश्मश्रुलोमभिः शुक्लैः, न बहुना धनेन, न पितृव्यभ्रात्रादिभिर्बन्धुभावैः, समुदितैरप्येतैर्न महत्त्वं भवति, किंतु ऋषय इमं धर्मं कृतवन्तः । यः साङ्गवेदाध्येता सोऽस्माकं महान् सम्मतः ॥ १५४ ॥

१५४. न वर्षों से, न सफेद केश-श्मश्रु-लोमों से, न धन से, न बन्धुओं से [बड़प्पन आता है]; ऋषियों ने यह धर्म (नियम) बनाया है जो अनूचान (अङ्गों के सहित वेदों का अध्येता) है, वह ही हमारे लिए महान् है।

**विप्राणां ज्ञानतो ज्यैष्ठ्यं क्षत्रियाणां तु वीर्यतः ।**
**वैश्यानां धान्यधनतः शूद्राणामेव जन्मतः ॥ १५५ ॥**

विप्राणामिति ॥ ब्राह्मणानां विद्यया, क्षत्रियाणां पुनर्वीर्येण, वैश्यानां धान्यवस्त्रादिधनेन, शूद्राणामेव पुनर्जन्मना श्रेष्ठत्वम् । सर्वत्र तृतीयार्थे तसिः ॥ १५५ ॥

१५५. विप्रों की ज्ञान से ज्येष्ठता है, क्षत्रियों की वीर्य (शक्ति) से, वैश्यों की धान्य-धन से और शूद्रों की जन्म से (अर्थात् शूद्रों में एक-दूसरे से बड़ा आयु के कारण होता है।

**न तेन वृद्धो भवति येनास्य पलितं शिरः ।**
**यो वै युवाप्यधीयानस्तं देवाः स्थविरं विदुः ॥ १५६ ॥**

---

१५४. पलितम्—केशादौ जरया जाता श्वेतता ।

अनूचानः—शिक्षादिषडङ्गसहितवेदाध्येता । वेदार्थानुवचनसमर्थः ।

न तेनेति ॥ न तेन वृद्धो भवति येनास्य शुक्लकेशं शिरः किन्तु युवापि सन् यो विद्वांस्तं देवाः स्थविरं जानन्ति ॥ १५६ ॥

१५६. उससे (उस कारण से) वृद्ध नहीं होता है जिससे इसका सिर सफेद बालों वाला हो गया है। (अर्थात् सफेद बालों के कारण वृद्ध नहीं होता)—जवान भी, जो अध्ययनशील है, देव उसे वृद्ध जानते हैं।

**यथा काष्ठमयो हस्ती यथा चर्ममयो मृगः ।**

**यश्च विप्रोऽनधीयानस्त्रयस्ते नाम बिभ्रति ॥ १५७ ॥**

यथा काष्ठमय इति ॥ यथा काष्ठघटितो हस्ती, यथा चर्मनिर्मितो मृगः, यश्च विप्रो नाधीते, त्रय एते नाममात्रं वहन्ति, न तु हस्त्यादिकार्यं शत्रुवधादिकं कर्तुं क्षमन्ते ॥ १५७ ॥

१५७. जैसे लकड़ी का बना हुआ हाथी, जैसे चमड़े से बना हुआ हिरन और जो न पढ़ने वाला विप्र—ये तीनों नाम को [ही] धारण करते हैं (अर्थात् नाम के हाथी, हिरन या विप्र हैं)।

**यथा षण्ढोऽफलः स्त्रीषु यथा गौर्गवि चाफला ।**

**यथा चाज्ञेऽफलं दानं तथा विप्रोऽनृचोऽफलः ॥ १५८ ॥**

यथा षण्ढ इति ॥ यथा नपुंसकः स्त्रीषु निष्फलः, यथा च स्त्रीगवी गव्यामेव निष्फला, यथा चाज्ञे दानमफलं, तथा ब्राह्मणोऽप्यनधीयानो निष्फलः श्रौतस्मार्तकर्मानर्हतया तत्फलरहितः ॥ १५८ ॥

१५८. जैसे नपुंसक स्त्रियों में निष्फल है, जैसे गौ गौ में अफल (फल-रहित) है, जिस प्रकार मूर्ख में दान अफल है वैसे ही ऋचाओं (वेद, वेद ज्ञान, स्वाध्याय) से रहित विप्र अफल है।

**अहिंसयैव भूतानां कार्यं श्रेयोऽनुशासनम् ।**

**वाक्चैव मधुरा श्लक्ष्णा प्रयोज्या धर्ममिच्छता ॥ १५९ ॥**

अहिंसयैवेति ॥ भूतानां शिष्याणां प्रकरणाच्छ्रेयोऽर्थमनुशासनमनतिहिंसया कर्तव्यम्, 'रज्ज्वा वेणुदलेन वा' (८।२९९) इत्यल्पहिंसाया अभ्यनुज्ञानात्।

वाणी मधुरा प्रीतिजननी श्लक्ष्णा च नोच्चैरुच्यमाना शिष्यशिक्षार्थं धर्मवृद्धिमिच्छता प्रयोक्तव्या ॥ १५९ ॥

१५९. प्राणियों का (शिष्यों का) अनुशासन अहिंसा से ही करना चाहिए। धर्म को चाहने वाले के द्वारा मधुर और श्लक्ष्ण (चिकनी, कोमल) वाणी प्रयुक्त की जानी चाहिए।

इदानीं गुरुधर्मस्य फलं वर्ते वाङ्मनःसंयममाह—

**यस्य वाङ्मनसी शुद्धे सम्यग्गुप्ते च सर्वदा ।**
**स वै सर्वमवाप्नोति वेदान्तोपगतं फलम् ॥ १६० ॥**

यस्येति ॥ अध्यापयितुरेव यस्य वाङ्मनसयोरुभयं शुद्धं भवति, वागनृतादिभिरदुष्टा, मनश्च रागद्वेषादिभिरदूषितं भवति, एते वाङ्मनसी निषिद्धविषयप्रकरणे सर्वदा यस्य पुनः सुरक्षिते भवतः, स वेदान्तोपगतं सर्वं फलं सर्वज्ञत्वं सर्वज्ञानादिरूपं मोक्षलाभमवाप्नोति ॥ १६० ॥

१६०. जिसके वाणी और मन शुद्ध हैं तथा सदा भली भांति रक्षित हैं, वह वेदान्त में गये हुए (वेदान्त से प्राप्त होने वाले) सारे फल को प्राप्त कर लेता है।

**नारुंतुदः स्यादार्तोऽपि न परद्रोहकर्मधीः ।**
**ययास्योद्विजते वाचाऽनालोक्यां तामुदीरयेत् ॥ १६१ ॥**

नारुंतुद इति ॥ अयमपि गुरुसमासन्नस्यैव धर्मो नाध्यापकस्य । आर्तः पीडितोऽपि नारुंतुदः स्यात् मर्मपीडाकरं तत्त्वदूषणमुदाहरेत् । तथा परस्य द्रोहोऽपकारस्तदर्थं कर्म बुद्धिश्च न कर्तव्या । तथा यया वाचाऽस्य परो उद्विजते ता मर्मस्पृशमनालोक्यां स्वर्गादिप्राप्तिविरोधिनीं न वदेत् ॥ १६१ ॥

१६१. (स्वयं) आर्त (दुःखी भी) [अन्य के लिए] मर्मपीडाकर न होवे, न ही परद्रोह के कर्म [करने] का विचार रखने वाला हो। इसको जिस वाणी से

---

१५९. श्लक्ष्ण

(कोई) उद्विग्न, (भयभीत) होता है, (स्वयं) शोक न देने वाली उसको न बोले।

**संमानाद्ब्राह्मणो नित्यमुद्विजेत विषादिव ।**

**अमृतस्येव चाकाङ्क्षेदवमानस्य सर्वदा ॥ १६२ ॥**

संमानादिति ॥ ब्राह्मणः संमानाद्विषादिव सर्वदोद्विजेत संमाने प्रीतिं न कुर्यात् । अमृतस्येव सर्वस्माल्लोकादवमानस्याकाङ्क्षेत्, अवमाने परेण कृतेऽपि क्षमावानत्र खेदं न कुर्यात् । मानावमानद्वन्द्वसहिष्णुत्वमनेन विधीयते ॥ १६२ ॥

१६२. संमान से ब्राह्मण नित्य विष की तरह उद्विग्न हो (भयभीत हो, घबराये) और अपमान को सदा अमृत की तरह तीव्रता से चाहे।

अवमानसहिष्णुत्वे हेतुमाह—

**सुखं ह्यवमतः शेते सुखं च प्रतिबुध्यते ।**

**सुखं चरति लोकेऽस्मिन्नवमन्ता विनश्यति ॥ १६३ ॥**

सुखं ह्यवमतः शेत इति ॥ यस्मादवमाने परेण कृते तत्र खेदमकुर्वाणः सुखं निद्राति । अन्यथाऽवमानदुःखेन दह्यमानः कथं निद्रां लभते । कथं च सुखं प्रतिबुध्यते । प्रतिबुद्धश्च कथं सुखं कार्येषु चरति । अवमानकर्ता तेन पापेन विनश्यति ॥ १६३ ॥

१६३. क्योंकि जिसका अपमान हुआ है, वह सुखपूर्वक सोता है, सुखपूर्वक उठता है, सुखपूर्वक इस लोक में गति करता है; अपमान करने वाला नष्ट हो जाता है।

---

१६१. 'वाचान्नालोक्याम्' अस्य स्थाने यदि 'वाचा नालोक्याम्' इति स्यात्तदार्थे साधुत्वम् । नालोक्याम्—न अलोक्याम् । ताम् अलोक्यां [वाचं] न उदीरयेत् । कुल्लूको 'नालोक्यामि'ति पठति पुनः 'न वदेत्' इत्यत्र नेति कुत आगतम्?
पाठान्तर-कोषे 'वाचा नालोक्याम्' इत्यस्ति । तथापि 'वाचा नालोक्याम्' इति स्यात्तदार्थसाधुत्वम् ।

१६३. कुल्लूकस्य व्याख्याऽनावश्यका प्रतिभाति, असौ 'कथम्' इत्यस्याध्याहारं करोति । नैतदावश्यकम् । तात्पर्यमिदं प्रतिभाति यद् यदि केनचिदन्यस्य हानिर्न कृता, अपमानेऽपि क्षमाभावेन सोढुस्तस्य सर्वं सुखमेव 'यदि मनः शान्तं' तदा सुखमेवास्ति ।

**अनेन क्रमयोगेन संस्कृतात्मा द्विजः शनैः ।**
**गुरौ वसन्संचिनुयाद्ब्रह्माधिगमिकं तपः ॥ १६४ ॥**

अनेनेति ॥ अनेन क्रमकथितोपायेन जातकर्मादिनोपनयनपर्यन्तेन संस्कृतो द्विजो गुरुकुले वसन् शनैरत्वरया वेदग्रहणार्थं तपोऽभिहितवक्ष्यमाणनियमकलापरूपमनुतिष्ठेत् । विध्यन्तरसिद्धस्याप्ययमर्थवादोऽध्ययनाङ्गत्वबोधनाय ॥ १६४ ॥

१६४. इस क्रमयोग (क्रमपूर्वक बताए हुए उपायसमूह) से परिष्कृत हो गया है अन्तरात्मा (आत्मा, मन, बुद्धि आदि) जिसका ऐसा द्विज गुरु में (गुरु के समीप) रहता हुआ शनैः शनैः ब्रह्म (वेद, ज्ञान) को प्राप्त कराने वाले तप का संचय करे ।

अध्ययनाङ्गत्वमेव स्पष्टयति—

**तपोविशेषैर्विविधैर्व्रतैश्च विधिचोदितैः ।**
**वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना ॥ १६५ ॥**

तपोविशेषैरिति ॥ तपोविशेषैर्नियमकलापैर्विविधैर्बहुप्रकारैश्च 'अध्येष्यमाणस्त्वाचान्तः' (२।७०) इत्यादिनोक्तैः, 'सेवेतेमांस्तु नियमान्' (२।१७५) इत्यादिभिर्वक्ष्यमाणैरपि, व्रतैश्चोपनिषन्महानाम्निकादिभिर्विधिचोदितैः स्वगृह्यविहितैः समग्रवेदो मन्त्रब्राह्मणात्मकः सोपनिषत्कोऽध्यध्येतव्यः । रहस्यमुपनिषदः । प्राधान्यख्यापनाय पृथङ्निर्देशः ॥१६५ ॥

१६५. द्विजन्मा के द्वारा विशेष विशेष तपों से, विविध शास्त्र में प्रेरित (कथित) व्रतों से सारा सरहस्य (सोपनिषत्) वेद प्राप्त किया जाना अथवा अध्ययन किया जाना चाहिए ।

**वेदमेव सदाभ्यस्येत्तपस्तप्स्यन्द्विजोत्तमः ।**
**वेदाभ्यासो हि विप्रस्य तपः परमिहोच्यते ॥ १६६ ॥**

वेदमेवेति ॥ यत्र नियमानामङ्गत्वमुक्तं तत्कृत्स्नस्वाध्यायाध्ययनमनेन

१६८. जो द्विज वेद को न पढ़कर अन्यत्र श्रम करता है, वह जीता हुआ ही शीघ्र ही अन्वय (वंश, पुत्रपौत्रादि) सहित शूद्रत्व को प्राप्त हो जाता है।

द्विजानां तत्र तत्राधिकारस्तुतेर्द्विजत्वनिरूपणार्थमाह—

**मातुरग्रेऽधिजननं द्वितीयं मौञ्जिबन्धने।**
**तृतीयं यज्ञदीक्षायां द्विजस्य श्रुतिचोदनात् ॥ १६९ ॥**

मातुरग्र इति ॥ मातुः सकाशादादौ पुरुषस्य जन्म। द्वितीयं मौञ्जि-बन्धने उपनयने। 'ङ्यापोः संज्ञाछन्दसोर्बहुलम्' (पा. ६।३।६३) इति ह्रस्वः; तृतीयं ज्योतिष्टोमादियज्ञदीक्षायां वेदश्रवणात्। तथा च श्रुतिः 'पुनर्वा एतमृत्विजो गर्भं कुर्वन्ति यं दीक्षयन्ति' इति। प्रथमद्वितीयतृतीयजन्म-कथनं चेदं द्वितीयजन्मस्तुत्यर्थं, द्विजस्यैव यज्ञदीक्षायामप्यधिकारात् ॥ १६९ ॥

१६९. वेद के प्रेरण (कथन, विधान) से द्विज का पहला जन्म माँ से, द्वितीय मेखलाबन्धन (उपनयन) में, तीसरा यज्ञदीक्षा में होता है।

**तत्र यद् ब्रह्मजन्मास्य मौञ्जीबन्धनचिह्नितम्।**
**तत्रास्य माता सावित्री पिता त्वाचार्य उच्यते ॥ १७० ॥**

तत्रेति ॥ तेषु त्रिषु जन्मसु मध्ये यदेतद् ब्रह्मग्रहणार्थं जन्मोपनयनसंस्कार-रूपं मेखलाबन्धनोपलक्षितं तत्रास्य माणवकस्य सावित्री माता, आचार्यश्च पिता, मातृपितृसंपाद्यत्वाज्जन्मनः ॥ १७० ॥

१७०. उन [तीनों जन्मों] में इसका मेखलाबन्धन से चिह्नित जो ब्रह्म-जन्म (वेदज्ञान से जन्म) है—उसमें इसकी सावित्री माता [और] आचार्य पिता कहलाता है।

**वेदप्रदानादाचार्यं पितरं परिचक्षते।**
**न ह्यस्मिन्युज्यते कर्म किंचिदामौञ्जिबन्धनात् ॥ १७१ ॥**

वेदप्रदानादिति ॥ वेदाध्यापनादाचार्यं पितरं मन्वादयो वदन्ति। पितृ-वन्महोपकारफलाद् गौणं पितृत्वम्। महोपकारमेव दर्शयति—न ह्यस्मिन्निति।

---

१७०. ब्रह्मजन्म = कुल्लूकः—ब्रह्मग्रहणार्थं जन्म, बल्हरस्तमनुसरति। अस्माकं मतेन 'ब्रह्मणो ब्रह्मणि वा जन्म'।

यस्मादस्मिन्माणवके प्रागुपनयनात्किंचित्कर्म श्रौतं स्मार्तं च न संबध्यते, न तत्राधिक्रियत इत्यर्थः ॥ १७१ ॥

१७१. वेद [ज्ञान] देने के कारण आचार्य को पिता कहते हैं क्योंकि मौञ्जी-बन्धन (मेखला-बन्धन) से पहले इस (बालक) में कोई [श्रौत-स्मार्त] कर्म संबद्ध नहीं होता है—अर्थात् वह किसी श्रौतस्मार्त कर्म का अधिकारी नहीं होता ।

**नाभिव्याहारयेद् ब्रह्म स्वधानिनयनादृते ।**
**शूद्रेण हि समस्तावद्यावद्वेदे न जायते ॥ १७२ ॥**

नाभिव्याहारयेदिति ॥ आमौञ्जिबन्धनादित्यनुवर्तते । प्रागुपनयनाद्वेदं नोच्चारयेत् । स्वधाशब्देन श्राद्धमुच्यते । निनीयते निष्पाद्यते येन मन्त्रजातेन तद्वर्जयित्वा मृतपितृको नवश्राद्धादौ मन्त्रं नोच्चारयेत् । तद्व्यतिरिक्तं वेदं नोदाहरेत् । यस्माद्यावद्वेदे न जायते तावदसौ शूद्रेण तुल्यः ॥ १७२ ॥

१७२. श्राद्ध-निष्पादन [के मन्त्रों] को छोड़कर [मेखलाबन्धन से पूर्व] वेद का उच्चारण न करे, क्योंकि जब तक वेद में जन्म में नहीं लेता तब तक (वह) शूद्र के समान है ।

**कृतोपनयनस्यास्य व्रतादेशनमिष्यते ।**
**ब्रह्मणो ग्रहणं चैव क्रमेण विधिपूर्वकम् ॥ १७३ ॥**

कृतोपनयनस्येति । यस्मादस्य माणवकस्य 'समिधमाधेहि' (गृ. सू. १।२२।६) 'दिवा मा स्वाप्सीः' (गृ. सू. १।२२।२) इत्यादिव्रतादेशनं वेदस्याध्ययनं मन्त्रब्राह्मणक्रमेण 'अध्येष्यमाणस्त्वाचान्तः' (२।७०) इत्यादिविधिपूर्वकमुपनीतस्योपदिश्यते, तस्मादुपनयनात्पूर्वं न वेदमुदाहरेत् ॥ १७३ ॥

१७३. किया गया है उपनयन जिसका ऐसे इसका (इसके लिए) व्रतों का आदेश इष्ट है तथा क्रम से विधिपूर्वक ब्रह्म (वेद) का ग्रहण [इष्ट है] ।

**यद्यस्य विहितं चर्म यत्सूत्रं या च मेखला ।**
**यो दण्डो यच्च वसनं तत्तदस्य व्रतेष्वपि ॥ १७४ ॥**

यद्यस्येति ॥ यस्य ब्रह्मचारिणो यानि चर्मसूत्रमेखलादण्डवस्त्राण्युपनयनकाले गृह्येण विहितानि, गोदानादिव्रतेष्वपि तान्येव नवानि कर्तव्यानि ॥ १७४ ॥

१७४. जो इसका चर्म विहित (शास्त्रोक्त) है (जिस चर्म का इसके लिए विधान है), जो सूत्र और जो मेखला, जो दण्ड और जो वस्त्र (शास्त्रोक्त है), वह [ही] इसका व्रतों में भी [विहित है]।

**सेवेतेमांस्तु नियमान्ब्रह्मचारी गुरौ वसन् ।**

**सन्नियम्येन्द्रियग्रामं तपोवृद्ध्यर्थमात्मनः ॥ १७५ ॥**

सेवेतेति ॥ ब्रह्मचारी गुरुसमीपे वसन्निन्द्रियसंयमं कृत्वानुगतादृष्टवृद्ध्यर्थ-मिमान्नियमाननुतिष्ठेत् ॥ १७५ ॥

१७५. गुरु में (गुरु के समीप) रहता हुआ ब्रह्मचारी इन्द्रिय-समूह को नियन्त्रित करके अपनी तप की विशिष्ट वृद्धि के लिए इन नियमों का सेवन करे।

**नित्यं स्नात्वा शुचिः कुर्याद्देवर्षिपितृतर्पणम् ।**

**देवताभ्यर्चनं चैव समिदाधानमेव च ॥ १७६ ॥**

नित्यमिति ॥ प्रत्यहं स्नात्वा देवर्षिपितृभ्य उदकदानं, प्रतिमादिषु हरि-हरादिदेवपूजनं, सायंप्रातश्च समिद्धोमं कुर्यात् । यत्तु गौतमीये स्नाननिषेधो ब्रह्मचारिणः स सुखस्नानविषयः । अत एव बौधायनः (२।३८)—'नाप्सु श्लाघमानः स्नायात्' । विष्णुनापि—'कालद्वयमभिषेकाग्निकार्यकरणमप्सु दण्ड-वन्मज्जनम्' इति ब्रुवाणेन वारद्वयं स्नानमुपदिष्टम् ॥ १७६ ॥

१७६. नित्य स्नान करके शुद्ध [हुआ हुआ] देवों, ऋषियों और पितरों का तर्पण, देवताओं का सम्यक् अर्चन तथा समिधाओं का आधान (सायंप्रातः हवन) करे।

**वर्जयेन्मधु मांसं च गन्धं माल्यं रसान्स्त्रियः ।**

**शुक्तानि यानि सर्वाणि प्राणिनां चैव हिंसनम् ॥१७७॥**

वर्जयेदिति ॥ क्षौद्रं मांसं च न खादेत् । गन्धं च कर्पूरचन्दनकस्तूरिकादि वर्जयेत् । एषां च गन्धानां यथासम्भवं भक्षणमनुलेपनं च निषिद्धम् । माल्यं च न धारयेत् । उद्रिक्तरसांश्च गुडादीन खादेत् । स्त्रियश्च नोपेयात् । यानि स्वभावतो मधुरादिरसानि कालवशेनोदकवासादिना चाम्लानि तानि शुक्तानि न खादेत् । प्राणिनां हिंसां न कुर्यात् ॥ १७७ ॥

१७७. शराब, मांस, गन्ध, माला रस, स्त्रियां, जो सब शुक्त हैं तथा प्राणियों की हिंसा (इन सब का) वर्जन करे (इनका परिहार करे, इनसे दूर रहे) ।

**अभ्यङ्गमञ्जनं चाक्ष्णोरुपानच्छत्रधारणम् ।**
**कामं क्रोधं च लोभं च नर्तनं गीतवादनम् ॥ १७८ ॥**

अभ्यङ्गमिति ॥ तैलादिना शिरःसहितदेहमर्दनलक्षणं, कज्जलादिभिश्च चक्षुषोरञ्जनं, पादुकायाश्छत्रस्य च धारणं, कामं मैथुनातिरिक्तविषयाभिलाषातिशयम् । मैथुनस्य स्त्रिय इत्यनेनैव निषिद्धत्वात् । क्रोधलोभनृत्यगीतवीणापणवादि वर्जयेत् ॥ १७८ ॥

१७८. तेल लगाना (सिर पर लगाना तथा शरीर पर मालिश करना), आँखों में अंजन लगाना, जूते तथा छाते का धारण करना, काम, क्रोध, लोभ, नाचना, गाना, बजाना ये [सब छोड़ दे] ।

**द्यूतं च जनवादं च परिवादं तथानृतम् ।**
**स्त्रीणां च प्रेक्षणालम्भमुपघातं परस्य च ॥ १७९ ॥**

द्यूतं चेति ॥ अक्षक्रीडां, जनैः सह निरर्थकवाक्कलहं, परस्य दोषवादं, मृषाभिधानं, स्त्रीणां च मैथुनेच्छया सानुरागेण प्रेक्षणालिङ्गनं, परस्य चापकारं वर्जयेत् ॥ १७९ ॥

१७९. जुआ, लोगों से [निरर्थक] वाद (बातचीत, कलह आदि), निन्दा, अनृत (नियम-विरुद्ध आचरण) स्त्रियों को [कामभाव से] देखना तथा [उनसे] आलिङ्गन तथा दूसरे का अपकार—[इन सबको छोड़ दे] ।

---

१७७. शुक्त अम्लत्व को प्राप्त हुई वस्तुएं ।

शुक्तद्रव्यविशेषः—

"कन्दमूलफलादीनि सस्नेहलवणानि च ।
यत्र द्रव्येऽभिषूयन्ते तच्छुक्तमभिधीयते ॥

शुक्तस्य गुणाः

शुक्तं तीक्ष्णोष्णलवणं पित्तकृत् कटुकं लघु ।
रूक्षं कृम्युदरानाहशोषार्शोविषकुष्ठनुत्" (राजनिघण्टुः)

**एकः शयीत सर्वत्र न रेतः स्कन्दयेत्क्वचित् ।**

**कामाद्धि स्कन्दयन्रेतो हिनस्ति व्रतमात्मनः ॥ १८० ॥**

एक इति ॥ सर्वत्र नीचशय्यादावेकाकी शयनं कुर्यात् । इच्छया न स्वशुक्रं पातयेत् । यस्मादिच्छया स्वमेहनाच्छुक्रं पातयन्स्वकीयव्रतं नाशयति । व्रतलोपे चावकीर्णिप्रायश्चित्तं कुर्यात् ॥ १८० ॥

१८०. सब जगह अकेला सोए, कहीं भी वीर्य न गिराए । काम से वीर्य को गिराता हुआ अपने व्रत को नष्ट कर देता है ।

**स्वप्ने सिक्त्वा ब्रह्मचारी द्विजः शुक्रमकामतः ।**

**स्नात्वार्कमर्चयित्वा त्रिः पुनर्मामित्यृचं जपेत् ॥ १८१ ॥**

स्वप्न इति ॥ ब्रह्मचारी स्वप्नादावनिच्छया रेतः सिक्त्वा कृतस्नानश्चन्दनाद्यनुलेपनपुष्पधूपादिभिः सूर्यमभ्यर्च्य 'पुनर्मामैत्विन्द्रियम्' (आश्व. गृ. ३।६) इत्येतामृचं वारत्रयं पठेत् । । इदमत्र प्रायश्चित्तम् ॥ १८१ ॥

१८१. ब्रह्मचारी द्विज स्वप्न में बिना काम [के वीर्य को सिक्त करके (वीर्यपात करके), स्नान करके, सूर्य की पूजा करके तीन बार, 'पुनर्मामैत्विन्द्रियम्' इत्यादि ऋचा का जप करे ।

**उदकुम्भं सुमनसो गोशकृन्मृत्तिकाकुशान् ।**

**आहरेद्यावदर्थानि भैक्षं चाहरहश्चरेत् ॥ १८२ ॥**

उदकुम्भमिति ॥ जलकलशपुष्पगोमयमृत्तिकाकुशान् यावदर्थानि यावद्भिः प्रयोजनानि आचार्यस्य तावन्त्याचार्यायाहरेत् । अत एवोदकुम्भमित्येकवचनमप्यविवक्षितम् । प्रत्यहं चैतत् । अन्यदप्याचार्योपयुक्तमुपाहरेद्भैक्षं च प्रत्यहमर्जयेत् ॥ १८२ ॥

१८२. जल का घड़ा, फूल, गोबर, मिट्टी और कुश, जितने [आचार्य] के प्रयोजन हों [उतने] लाए और प्रतिदिन भिक्षा-समूह मांगने जाए ।

---

१८१. अथर्ववेदे निम्नलिखितः पाठः—

पुनर्मैत्विन्द्रियं पुनरात्मा द्रविणं ब्राह्मणं च ।

पुनरग्नयो धिष्ण्या यथास्थाम कल्पयन्तामिहैव ॥ (अथर्व.७.६७.१)

**वेदयज्ञैरहीनानां प्रशस्तानां स्वकर्मसु ।**
**ब्रह्मचार्याहरेद्भैक्षं गृहेभ्यः प्रयतोऽन्वहम् ॥ १८३ ॥**

वेदयज्ञैरिति ॥ वेदयज्ञैश्चात्यक्तानां स्वकर्मसु दक्षाणां गृहेभ्यः प्रत्यहं ब्रह्मचारी सिद्धान्नभिक्षासमूहमाहरेत् ॥ १८३ ॥

१८३. जितेन्द्रिय ब्रह्मचारी प्रतिदिन वेदों तथा यज्ञों से अहीन (युक्त) अपने कर्मों में प्रशस्त [गृहस्थों के] घर से भिक्षासमूह लाए ।

**गुरोः कुले न भिक्षेत न ज्ञातिकुलबन्धुषु ।**
**अलाभे त्वन्यगेहानां पूर्वं पूर्वं विवर्जयेत् ॥ १८४ ॥**

गुरोः कुल इति ॥ आचार्यस्य सपिण्डेषु, बन्धुषु, मातुलादिषु च न भिक्षेत । तद्गृहव्यतिरिक्तभिक्षायोग्यगृहाभावे चोक्तेभ्यः पूर्वं पूर्वं वर्जयेत् । ततश्च प्रथमं बन्धून्भिक्षेत, तदलाभे ज्ञातीन्, तदलाभे गुरोरपि ज्ञातीन्भिक्षेत ॥ १८४ ॥

१८४. गुरु के कुल में भिक्षा न मांगे, न ही सपिण्डों में, कुल [के लोगों] में और बन्धुओं में [भिक्षा मांगे]—अन्यों के गृहों से अलाभ में [अर्थात् वहां से भिक्षा न मिलने पर, [गुरु आदि में] पहले-पहले का वर्जन करे (अर्थात् बन्धुओं में जाए, वहां न मिले तो कुल में इत्यादि) ।

**सर्वं वापि चरेद्ग्रामं पूर्वोक्तानामसंभवे ।**
**नियम्य प्रयतो वाचमभिशस्तांस्तु वर्जयेत् ॥ १८५ ॥**

सर्वं वेति ॥ पूर्वं 'वेदयज्ञैरहीनानाम्' (२।१८३) इत्यनेनोक्तानामसंभवे सर्वं वा ग्राममुक्तगुणरहितमपि शुचिर्मौनी भिक्षेत । महापातकाद्यभिशस्तांस्त्यजेत् ॥ १८५ ॥

१८५. पहले कहे हुओं के न होने पर जितेन्द्रिय (ब्रह्मचारी) वाणी को नियन्त्रित करके सारे ग्राम में भिक्षा के लिए घूमे—[वहां भी] अभिशस्तों [महापातकग्रस्तों] का वर्जन करे ।

**दूरादाहृत्य समिधः संनिदध्याद्विहायसि ।**
**सायंप्रातश्च जुहुयात्ताभिरग्निमतन्द्रितः ॥ १८६ ॥**

---

१८५. अभिशस्तः—विनिन्दितः, विगर्हितः, पातककर्ता । परस्त्रियां परपुरुषे वा मैथुनं प्रति मिथ्यादूषितः । अभि√शस् वधे ।

दूराहृत्येति ॥ दूराहृत्य परिगृहीतवृक्षेभ्यः समिध आनीय आकाशे धारणाशक्तः पटलादौ स्थापयेत् । ताभिश्च समिद्भिः सायंप्रातरग्नौ होमं कुर्यात् ॥ १८६ ॥

१८६. दूर से समिधाओं को लाकर आकाश में रख दे । [उन समिधाओं] से सायं और प्रातः अग्नि में हवन करे ।

**अकृत्वा भैक्षचरणमसमिध्य च पावकम् ।**

**अनातुरः सप्तरात्रमवकीर्णिव्रतं चरेत् ॥ १८७ ॥**

अकृत्वेति ॥ भिक्षाहारं, सायंप्रातः समिद्धोमं, अरोगो नैरन्तर्येण सप्तरात्रमकृत्वा लुप्तव्रतो भवति । ततश्चावकीर्णिप्रायश्चित्तं कुर्यात् ॥ १८७ ॥

१८७. रोग से रहित, सात रात्रि तक भैक्षचरण, (भिक्षासमूह के लिए जाना, घूमना) को न करके, अग्नि को [समिधाओं से] न जलाकर (सायं-प्रातः समिद्धोम न करके) अवकीर्णिव्रत को करे ।

---

१८६. 'दूराद्' इति कस्मात्कथ्यते—आश्रमसंनिकटवृक्षाणां नाशो न स्यादिति कृत्वा ।

विहायसि–आकाशे–उच्चस्थाने । भूमौ न स्थापयेत्—येन भूमिमलिनता चरणस्पर्शादिदोषो वा न स्यात् ।

१८७. रोगरहित—तात्पर्य यह है कि यदि रोगी हो तो इन कर्त्तव्यों के अकरण में कोई पाप नहीं । अवकीर्णि–अवकीर्णमनेन इति येन नियमभङ्गः कृतः सोऽवकीर्णी । अवकीर्णिव्रतं (अवकीर्णिप्रायश्चित्तम्) मनुस्मृतौ श्लोकद्वये (११–११८, ११९) कथितम्—

अवकीर्णी तु काणेन गर्दभेन चतुष्पथे ।

पाकयज्ञविधानेन यजेत निर्ऋतिं निशि ॥

हुत्वाग्नौ विधिवद्धोमानन्ततश्च समित्यृचा ।

वातेन्द्रगुरुवह्नीनां जुहुयात्सर्पिषाहुतीः ॥

गौतमस्मृतिः (२६०-२.)—

[अवकीर्णी] सोऽमावास्यायां निश्यग्निमुपसमाधाय प्रायश्चित्ताज्याहुतीर्जुहोति ।

१८९. निमंत्रित व्रती देवों के सम्मान में किये गये [तथा] पितरों के सम्बन्ध में किये कर्म में [एक व्यक्ति] के [अपने] व्रत के अनुकूल अन्न को भी यथेच्छ, ऋषि के समान [आचरण करता हुआ] खाये—[इससे] उसका व्रत लुप्त नहीं होता है।

**ब्राह्मणस्यैव कर्मैतदुपदिष्टं मनीषिभिः ।**
**राजन्यवैश्ययोस्त्वेवं नैतत्कर्म विधीयते ॥ १९० ॥**

ब्राह्मणस्यैवेति ॥ ब्राह्मणक्षत्रियविशां त्रयाणामेव ब्रह्मचारिणां भैक्षाचरणविधानात् 'व्रतवत्' (२।१८९) इत्यनेन तदभ्यासदशामेकान्नभोजनमुपदिष्टं क्षत्रियवैश्ययोरपि पुनरनेन पर्युदस्यते । एतदेकान्नभोजनरूपं कर्म तद् ब्राह्मणस्यैव वेदार्थविद्भिर्विहितम् । क्षत्रियवैश्ययोः पुनर्न चैतत्कर्मेति ब्रूते ॥ १९० ॥

१९०. मनीषियों के द्वारा यह कर्म ब्राह्मण का ही (के लिए ही) उपदिष्ट है—क्षत्रिय और वैश्य के लिए इस कार्य का विधान नहीं किया गया है।

**चोदितो गुरुणा नित्यमप्रचोदित एव वा ।**
**कुर्यादध्ययने यत्नमाचार्यस्य हितेषु च ॥ १९१ ॥**

चोदित इति ॥ आचार्येण प्रेरितो न प्रेरितो वा स्वयमेव प्रत्यहमध्ययने गुरुहितेषु चोद्योगं कुर्यात् ॥ १९१ ॥

१९१. गुरु से नित्य प्रेरित या अप्रेरित भी अध्ययन में तथा आचार्य के हित (हितकारी कार्यों) में यत्न करे।

**शरीरं चैव वाचं च बुद्धीन्द्रियमनांसि च ।**
**नियम्य प्राञ्जलिस्तिष्ठेद्वीक्षमाणो गुरोर्मुखम् ॥ १९२ ॥**

शरीरं चेति ॥ देहवाग्बुद्धीन्द्रियमनांसि नियम्य कृताञ्जलिर्गुरुमुखं पश्यंस्तिष्ठेन्नोपविशेत् ॥ १९२ ॥

१९२. शरीर, वाणी, ज्ञानेन्द्रियों तथा मन को नियन्त्रित करके हाथ जोड़े हुए गुरु के मुह को देखता हुआ (उसकी आज्ञा की प्रतीक्षा करता हुआ) खड़ा हो या खड़ा रहे।

**नित्यमुद्धृतपाणिः स्यात्साध्वाचारः सुसंयतः ।**
**आस्यतामिति चोक्तः सन्नासीताभिमुखं गुरोः ॥ १९३ ॥**

नित्यमिति ॥ सततमुत्तरीयाद् बहिष्कृतदक्षिणबाहुः, शोभनाचारः, वस्त्रावृतदेहः, 'आस्यताम्' इति गुरुणोक्तः सन् गुरोरभिमुखं यथा भवति तथा आसीत ॥ १९३ ॥

१९३. नित्य [उत्तरीय] निकले हुए हाथ वाला, शोभन आचार वाला तथा सुसंयत रहे और 'बैठा जाए' इस प्रकार कहा गया गुरु के अभिमुख बैठे।

**हीनान्नवस्त्रवेषः स्यात्सर्वदा गुरुसन्निधौ ।**
**उत्तिष्ठेत्प्रथमं चास्य चरमं चैवं संविशेत् ॥ १९४ ॥**

हीनान्नवस्त्रेति ॥ सर्वदा गुरुसमीपे गुर्वपेक्षया स्वपकृष्टान्नवस्त्रप्रसाधनो भवेत् । गुरोश्च प्रथमं रात्रिशेषे शयनादुत्तिष्ठेत्, प्रदोषे च गुरौ सुप्ते पश्चात्स्व-पीत ॥ १९४ ॥

१९४. गुरु के समीप सदा (गुरु की अपेक्षा) हीन अन्न और वस्त्र-वेष वाला होवे—गुरु से पहले [सोकर] उठे और बाद में सोवे।

**प्रतिश्रवणसंभाषे शयानो न समाचरेत् ।**
**नासीनो न च भुञ्जानो न तिष्ठन्न पराङ्मुखः ॥ १९५ ॥**

प्रतिश्रवणेति ॥ प्रतिश्रवणमाज्ञाङ्गीकरणं, संभाषणं च गुरोः शय्यायां सुप्तः, आसनोपविष्टः, भुञ्जानः, तिष्ठन्, विमुखश्च न कुर्यात् ॥ १९५ ॥

१९५. सुनना और बातचीत लेटे हुए न करे, न बैठे हुए, न खाते हुए, न मुँह फेर कर खड़े हुए।

---

१९५. भाव यह है कि गुरु कोई बात कहे तो उसे सुनते या गुरु से बात-चीत करते हुए विद्यार्थी सम्मानपूर्वक खड़ा रहे। लेटे हुए बैठे हुए, खाते हुए या मुँह फेर कर खड़े हुए प्रतिश्रवण या बातचीत न करे।

शयानः—कुल्लूकः—शय्यायां सुप्तः—नार्थोऽयं साधुः प्रतिभाति ।

तिष्ठन्—कुल्लूकोबुह्लरश्चोभावपि 'तिष्ठन्' इति 'पराङ्मुखः' इति च पृथक्त्वेन गृहीतः । अस्माकं मतेन 'पराङ्मुखस्तिष्ठन्' इति सम्बद्धं ग्रहीतव्यं, यतो यदि तिष्ठन्नपि (standing) वार्तालापं न करिष्यति तदा कथं करिष्यति ?

कथं नहि कुर्यादित्याह—

**आसीनस्य स्थितः कुर्यादभिगच्छंस्तु तिष्ठतः ।**

**प्रत्युद्गम्य त्वाव्रजतः पश्चाद्धावंस्तु धावतः ॥ १९६ ॥**

आसीनस्येति ॥ आसनोपविष्टस्य गुरोराज्ञां ददतः स्वयमासनादुत्थितः, तिष्ठतो गुरोरादिशतस्तदभिमुखं कतिचित्पदानि गत्वा, यदा गुरुरागच्छति तदाप्यभिमुखं गत्वा, यदा तु गुरुर्धावन्नादिशति तदा तस्य पश्चाद्धावन्प्रतिश्रवणसंभाषे कुर्यात् ॥ १९६ ॥

१९६. [वार्तालाप आदि कैसे करे ?] बैठे हुए के साथ खड़ा हुआ करे, खड़े हुए के साथ उसकी ओर जाता हुआ, आते हुए के साथ प्रत्युद्गमन करके, [और] दौड़ते हुए के पीछे दौड़ता हुआ ।

**पराङ्मुखस्याभिमुखो दूरस्थस्यैत्य चान्तिकम् ।**

**प्रणम्य तु शयानस्य निदेशे चैव तिष्ठतः ॥ १९७ ॥**

पराङ्मुखस्येति । पराङ्मुखस्य आदिशतः संमुखस्थः, दूरस्थस्य गुरोः समीपमागत्य, शयानस्य गुरोः प्रणम्य प्रह्वो भूत्वा, निदेशे निकटेऽवतिष्ठतो गुरोरादिशतः प्रह्वीभूयैव प्रतिश्रवणसंभाषे कुर्यात् ॥ १९७ ॥

१९७. [तथा] मुंह फेरे हुए के अभिमुख हुआ हुआ, दूर ठहरे के पास [गया हुआ], लेटे हुए या समीप खड़े हुए [आदेश देते हुए गुरु को] प्रणाम करके ।

**नीचं शय्यासनं चास्य सर्वदा गुरुसन्निधौ ।**

**गुरोस्तु चक्षुर्विषये न यथेष्टासनो भवेत् ॥ १९८ ॥**

नीचमिति ॥ गुरुसमीपे चास्य गुरुशय्यासनापेक्षया नीचे एव शय्यासने नित्यं स्याताम् । यत्र च देशे समासीनं गुरुः पश्यति न तत्र यथेष्टचेष्टां चरणप्रसारणादिकां कुर्यात् ॥ १९८ ॥

---

१९६. 'अभिगच्छन्' तथा 'प्रत्युद्गम्य' इत्यत्र न स्वरूपभेदो, मात्राभेद एव । 'प्रत्युद्गम्य' इत्यत्र गन्तुः शरीरस्योर्ध्वभाग उद्गतस्तीव्रतरा च गतिः (प्रति+उद्+गम्य) ।

१९७. निदेशे = निकटे; बूह्लरः निम्नस्थाने (in a lower place) ।

१९८. गुरु के समीप इस (छात्र) के शय्या और आसन सदा नीचे [हों]—गुरु के चक्षुर्विषय में (दृष्टि की परिधि में) यथेष्टासन (इच्छा के अनुसार आराम से, बेपरवाही से बैठने वाला) न होवे।

**नोदाहरेदस्य नाम परोक्षमपि केवलम्।**
**न चैवास्यानुकुर्वीत गतिभाषितचेष्टितम्॥ १९९॥**

नोदाहरेदिति॥ अस्य गुरोः परोक्षमपि उपाध्यायाचार्यादिपूजावचनोपपदशून्यं नाम नोच्चारयेत्। न तु गुरोर्गमनभाषितचेष्टितान्यनुकुर्वीत गुरुगमनादि-सदृशान्यात्मनो गमनादीन्युपहासबुद्ध्या न कुर्वीत॥ १९९॥

१९९. परोक्ष में भी (आंख से परे, पीठ-पीछे) भी इसका केवल (सम्मान-युक्त विशेषणों से रहित) नाम उच्चारण न करे; न ही इसकी गति, भाषण या चेष्टा का अनुकरण करे (नकल न उतारे)।

**गुरोर्यत्र परीवादो निन्दा वापि प्रवर्तते।**
**कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः॥ २००॥**

गुरोर्यत्रेति॥ विद्यमानदोषस्याभिधानं परीवादः, अविद्यमानदोषाभिधानं निन्दा, यत्र देशे गुरोः परीवादो निन्दा च वर्तते तत्र स्थितेन शिष्येण कर्णौ हस्तादिना पिधातव्यौ। तस्माद्वा देशाद्देशान्तरं गन्तव्यम्॥ २००॥

२००. गुरु का जहां परीवाद (विद्यमान दोषों का कथन) अथवा निन्दा (अविद्यमान दोषों का कथन) हो रहा हो, वहां कान ढक लेने (बन्द कर लेने) चाहिए अथवा वहां से दूसरी जगह चले जाना चाहिए।

इदानीं शिष्यकर्तृकपरीवादादिफलमाह—

**परीवादात्खरो भवति श्वा वै भवति निन्दकः।**
**परिभोक्ता कृमिर्भवति कीटो भवति मत्सरी॥ २०१॥**

परीवादादिति॥ गुरोः परीवादाच्छिष्यो मृतः खरो भवति। गुरोर्निन्दकः

---

१९९. भारते विद्यालयेषु महाविद्यालयेषु छात्रा एवमनुकुर्वन्ति। इदं हि तेषां व्यक्तित्वविनाशकम्।

**प्रतिवातेऽनुवाते च नासीत गुरुणा सह ।**
**असंश्रवे चैव गुरोर्न किंचिदपि कीर्तयेत् ॥ २०३ ॥**

प्रतिवात इति ॥ प्रतिगतोऽभिमुखीभूतः शिष्यस्तदा गुरुदेशाच्छिष्यदेशमागच्छति स प्रतिवातः, यः शिष्यदेशाद् गुरुदेशमागच्छति सोऽनुवातः, तत्र गुरुणा समं नासीत । तथाऽविद्यमानः संश्रवो यत्र तस्मिन्नसंश्रवे । गुरुर्यत्र न शृणोतीत्यर्थः । तत्र गुरुगतमन्यगतं वा न किंचित्कथयेत् ॥ २०३ ॥

२०३. प्रतिवात और अनुवात में गुरु के साथ न बैठे तथा गुरु के असंश्रव (भलीभांति न सुनने में) कुछ भी न कहे ।

**गोऽश्वोष्ट्रयानप्रासादस्रस्तरेषु कटेषु च ।**
**आसीत गुरुणा सार्धं शिलाफलकनौषु च ॥ २०४ ॥**

गोऽश्वेति ॥ 'यान'शब्दः प्रत्येकमभिसंबध्यते । बलीवर्दयाने, घोटकप्रयुक्ते याने, उष्ट्रयुक्तयाने, रथकाष्ठादौ, प्रासादोपरि, स्रस्तरे, कटे च तृणनिर्मिते, शिलायां, फलके च दारुघटितदीर्घासने, नौकायां च गुरुणा सह आसीत ॥ २०४ ॥

२०४. गोयान, (बैलगाड़ी) अश्वयान (रथ, तांगा आदि), उष्ट्रयान (ऊंटगाड़ी), में, महल में, स्रस्तर (घास या पत्ते के आसन) पर, चटाइयों पर, तथा शिला पर, पटरे पर और नौका में—गुरु के साथ बैठ सकता है ।

**गुरोर्गुरौ सन्निहिते गुरुवद्वृत्तिमाचरेत् ।**
**न चानिसृष्टो गुरुणा स्वान्गुरूनभिवादयेत् ॥ २०५ ॥**

२०३. भाव यह है कि रथ में गुरु के साथ बैठकर शिष्य जा रहा है । तब प्रतिवात और अनुवात में (यदि रथ गुरु के घर से शिष्य के घर जा रहा है तो इसे प्रतिवात कहते हैं और जब शिष्य के घर से गुरु के घर जा रहा है, उसे अनुवात कहते हैं) शिष्य गुरु के साथ एक आसन पर न बैठे । गुरु आगे बैठे, शिष्य पीछे होकर बैठे । तथा रथ में यदि कोई और भी बैठा हो उसके साथ कानाफूसी न करे—जो कुछ कहे, इस प्रकार कहे कि गुरु भी सुन सके ।

कुल्लूकोऽत्र परम्परां परित्यज्य केवलं शब्दार्थमात्रं करोति । नेदं साधु

गुरोर्गुराविति ॥ आचार्यस्याचार्ये संनिहिते आचार्य इव तस्मिन्नप्यभिवादनादिकां वृत्तिमनुतिष्ठेत् । तथा गुरुगृहे वसन् शिष्य आचार्येणानियुक्तो न स्वान्गुरून्मातृपितृव्यादीनभिवादयेत् ॥ २०५ ॥

२०५. गुरु के गुरु के समीप होने पर गुरु के समान ही [अभिवादन आदि] वृत्ति को करे [गुरु के घर में रहता हुआ] गुरु से अनिसृष्ट (अनादिष्ट, न आज्ञा दिया गया) [अपने] गुरुओं (माता पिता-आदि) को अभिवादन न करे ।

**विद्यागुरुष्वेतदेव नित्या वृत्तिः स्वयोनिषु ।**
**प्रतिषेधत्सु चाधर्माद्धितं चोपदिशत्स्वपि ॥ २०६ ॥**

विद्येति ॥ आचार्यव्यतिरिक्ता उपाध्याया विद्यागुरवः, तेष्वेतदेवेति सामान्योपक्रमः । किं तत् ? आचार्य इव नित्या सार्वकालिकी वृत्तिर्विधेया, तथा स्वयोनिष्वपि पितृव्यादिषु तद्वृत्तिः, अधर्मान्निषेधत्सु धर्मतत्त्वं चोपदिशत्सु गुरुवद्वर्तितव्यम् ॥ २०६ ॥

२०६. विद्यागुरुओं (आचार्य के अतिरिक्त अन्य अध्यापकों) में (के प्रति), अपने कुल के गुरुओं (पितृव्य आदिकों) में, अधर्म से रोकने वालों में, हित का उपदेश देने वालों में भी यह ही (पहले श्लोकों में गुरु [आचार्य] के प्रति कही गई) वृत्ति (व्यवहार) करे ।

**श्रेयःसु गुरुवद्वृत्तिं नित्यमेव समाचरेत् ।**
**गुरुपुत्रेषु चार्येषु गुरोश्चैव स्वबन्धुषु ॥ २०७ ॥**

श्रेयःस्विति ॥ श्रेयःसु विद्यातपःसमृद्धेषु, आर्येष्विति गुरुपुत्रविशेषणम् । समानजातिगुरुपुत्रेषु गुरोश्च ज्ञातिष्वपि पितृव्यादिषु सर्वदा गुरुवद् वृत्तिमनुतिष्ठेत् । गुरुपुत्रश्चात्र शिष्याधिकवयाश्च बोद्धव्यः । शिष्यबालसमानवयसामनन्तरं विधानस्य वक्ष्यमाणत्वात् ॥ २०७ ॥

२०७. [अपने से] उत्कृष्टतर जनों में (के प्रति) आर्य गुरुपुत्रों में और गुरु के अपने बन्धुओं में गुरु के समान व्यवहार करे ।

आर्येषु गुरुपुत्रेषु—अनुकल्हरं गुरोः सवर्णायाः पत्न्या जातेषु पुत्रेषु ।

**बालः समानजन्मा वा शिष्यो वा यज्ञकर्मणि ।**
**अध्यापयन्गुरुसुतो गुरुवन्मानमर्हति ॥ २०८ ॥**

बाल इति ॥ कनिष्ठः सवया वा ज्येष्ठोऽपि वा शिष्योऽध्यापयज्ञाध्यापन-समर्थः । गृहीतवेद इत्यर्थः । न यज्ञकर्मणि ऋत्विगनुष्ठित्वा यज्ञदर्शनार्थ-मागतो गुरुवत्पूजामर्हति ॥ २०८ ॥

२०८. बालक या समान जन्म वाला (समान आयु वाला) या यज्ञकर्म में शिष्य [भी] गुरु का पुत्र पढ़ाता हुआ गुरु के समान ही मान के योग्य है ।

आचार्यवदाचार्यविशेषेण पूजायां प्राप्तायां विशेषमाह—

**उत्सादनं च गात्राणां स्नापनोच्छिष्टभोजने ।**
**न कुर्याद् गुरुपुत्रस्य पादयोश्चावनेजनम् ॥ २०९ ॥**

उत्सादनमिति ॥ गात्राणामुत्सादनमुद्वर्तनं, उच्छिष्टस्य भक्षणं, पादयोश्च प्रक्षालनं गुरुपुत्रस्य न कुर्यात् ॥ २०९ ॥

२०९. गुरु-पुत्र के अङ्गों को दबाना (पैर दबाना आदि) [उसे] नहलाना [उसका] उच्छिष्ट खाना और पैर धोना न करे ।

**गुरुवत्प्रतिपूज्याः स्युः सवर्णा गुरुयोषितः ।**
**असवर्णास्तु संपूज्याः प्रत्युत्थानाभिवादनैः ॥ २१० ॥**

गुरुवदिति ॥ सवर्णा गुरुपत्न्यः गुरुवदाज्ञाकरणादिना पूज्या भवेयुः । असवर्णाः पुनः केवलप्रत्युत्थानाभिवादनैः ॥ २१० ॥

---

२०८. भाव यह है कि गुरु के स्थान पर यदि गुरु-पुत्र पढ़ा रहा हो तो उसका गुरु के समान ही मान करो, भले ही वह आयु में छोटा हो या बराबर हो और भले ही यज्ञकर्म में वह तुम्हारा शिष्य हो अर्थात् तुम उसे कुछ सिखाते हो ।

२०९. भाव यह है कि गुरु-पुत्र पढ़ा रहा हो तो गुरु के समान मान के योग्य है, परन्तु उसके लिए उत्सादन आदि कार्यों के करने का विधान नहीं है ।

कुल्लूकः स्नापनशब्दस्यार्थं न ददाति । बल्हरोऽपि तथैव करोति । किं कारणमत्र ?

२१०. गुरु की सवर्ण (अपने समान वर्ण की) पत्नियों की गुरु के समान पूजा करनी चाहिए; असवर्ण पत्नियों की पूजा तो प्रत्युत्थान और अभिवादनों से [ही]।

**अभ्यञ्जनं स्नापनं च गात्रोत्सादनमेव च ।**
**गुरुपत्न्या न कार्याणि केशानां च प्रसाधनम् ॥ २११ ॥**

अभ्यञ्जनमिति ॥ तैलादिना देहाभ्यङ्गः, स्नापनं गात्राणां चोद्वर्तनं, केशानां च मालादिना प्रसाधनम्; एतानि गुरुपत्न्या न कर्तव्यानि। केशानामिति प्रदर्शन-मात्रार्थं, देहस्यापि चन्दनादिना प्रसाधनं न कुर्यात् ॥ २११ ॥

२११. गुरु पत्नी की मालिश, [उसे] नहलाना, [उसके] अङ्ग दबाना तथा केशों का प्रसाधन (कंघी करना, फूल आदि लगाना) नहीं करने चाहिए।

**गुरुपत्नी तु युवतिर्नाभिवाद्येह पादयोः ।**
**पूर्णविंशतिवर्षेण गुणदोषौ विजानता ॥ २१२ ॥**

गुरुपत्नी त्विति ॥ युवतिर्गुरुपत्नी पादयोरुपसंगृह्य अभिवादनदोषगुणज्ञेन यूना नाभिवाद्या। पूर्णविंशतिवर्षत्वं यौवनप्रदर्शनार्थम्। बालस्य पादयोरभि-वादनमनिषिद्धम्। यूनस्तु भूमावभिवादनं वक्ष्यति ॥ २१२ ॥

२१२. पूरे कर लिए हैं २० वर्ष जिसने ऐसे [तथा] गुण (अच्छा, ठीक) और दोष (बुरा, गलत) को जानने वाले [शिष्य] के द्वारा, यहां, युवती गुरु-पत्नी पैरों में (पैर पकड़कर) अभिवादन नहीं की जानी चाहिए।

**स्वभाव एष नारीणां नराणामिह दूषणम् ।**
**अतोऽर्थान्न प्रमाद्यन्ति प्रमदासु विपश्चितः ॥ २१३ ॥**

स्वभाव इति ॥ स्त्रीणामयं स्वभावः यदिह शृङ्गारचेष्टया व्यामोह्य पुरुषाणां दूषणम्। अतोऽर्थादस्माद्धेतोः पण्डिताः स्त्रीषु न प्रमत्ता भवन्ति ॥ २१३ ॥

२१३. यहां (इस संसार में) नारियों का यह स्वभाव है [कि] नरों का दूषित करना। इस कारण ज्ञानी जन प्रमदाओं में प्रमत्त (गाफिल, प्रमादयुक्त) नहीं होते अर्थात् प्रमदाओं के विषय में सावधान रहते हैं।

---

२१३, २१४—भाव यह है कि नारियों का यह स्वभाव है कि पुरुषों को आकृष्ट करें, उनके मन में विकार पैदा करें—अतः विपश्चित् जन उनसे व्यवहार

अविद्वांसमलं लोके विद्वांसमपि वा पुनः ।
प्रमदा ह्युत्पथं नेतुं कामक्रोधवशानुगम् ॥ २१४ ॥

अविद्वांसमिति ॥ 'विद्वानहं जितेन्द्रिय' इति बुद्ध्या न स्त्रीसन्निधिर्विधेयः । यस्मादविद्वांसं विद्वांसमपि वा पुनः पुरुषं देहधर्मात्कामक्रोधवशानुगामिनं स्त्रिय उत्पथं नेतुं समर्थाः ॥ २१४ ॥

२१४. [देह-धर्म से—देह के स्वभाव से] काम और क्रोध के वश हुए-हुए, उनके अनुगामी अविद्वान् को तथा विद्वान् को भी प्रमदाएं अनुचित मार्ग पर ले जाने के लिए समर्थ हैं ।

करते हुए सावधान रहते हैं—ऐसा अवसर नहीं आने देते कि इस प्रकार की कोई बात बने या बढ़े ।

प्रमदाशब्दस्य प्रयोगः साभिप्रायः—यः प्रमादे पातयतीति । परं यो जितेन्द्रियो भवति नासौ प्रमत्तो भवति, काचिदपि कीदृश्यपि प्रमदा तत्र भवेत् ।

नारीणां स्वभावः—इत्यस्य किं तात्पर्यम् ? किं नारीणां निन्दा कृता मनुना ? नैव । केवलं नार्या निरतिशयस्वाभाविकसंमोहनशक्तेश्चर्चा कृता । नास्मिन् सम्मोहने नार्याः काचिदिच्छा योजना वा । 'स्वभाव' इत्यस्य तात्पर्यं स्वरूपमिति । यथा मिष्टान्नस्य स्वभावो जिह्वालौल्योत्पादनमग्नेः स्वभावो दाहो जलस्य च स्वभावः शैत्यम् । यदि कश्चित्कथयेत्—'स्वभाव एष वह्नेर्हि नराणामिह दाहनम्' अत्र वह्नेर्निन्दा न कृता, केवलं तस्य स्वभावः प्रदर्शितः । नारीणां निन्दा नास्तीदं तत्त्वं २.२१५ श्लोकेन स्पष्टीभवति । तत्र बलवत इन्द्रियग्रामस्य चर्चा कृता ।

अविदुषां तु कथैव का, ज्ञानवन्तो विद्वांसोऽपि कामक्रोधवशीभूता भवन्ति, प्रमदाभिरुत्पथं नीयन्ते । यदि कश्चित्कामक्रोधवशीभूतो नास्ति तस्मिन्न कश्चित्प्रमदानां प्रभाव इत्यपि मुनिना कथ्यते । कामक्रोधविषये गीतायां कथितम्—

अत आह—

**मात्रा स्वस्रा दुहित्रा वा न विविक्तासनो भवेत् ।**
**बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति ॥ २१५ ॥**

मात्रेति ॥ मात्रा, भगिन्या, दुहित्रा, निर्जनगृहादौ नासीत । यतोऽतिबलः इन्द्रियगणः शास्त्रनियमितात्मानमपि पुरुषं परवशं करोति ॥ २१५ ॥

२१५. माता, बहिन या बेटी के साथ [भी] विविक्तासन (एकान्त में आसन [बैठना] है जिसका ऐसा) न हो; अर्थात् एकान्त में न बैठे, [क्योंकि] बलवान् इन्द्रिय-समूह विद्वान् को भी खींच लेता है ।

**कामं तु गुरुपत्नीनां युवतीनां युवा भुवि ।**
**विधिवद्वन्दनं कुर्यादसावहमिति ब्रुवन् ॥ २१६ ॥**

कामं त्विति ॥ कामं तु गुरुपत्नीनां युवतीनां स्वयमपि युवा यथोक्तविधिना 'अभिवादयेऽमुकशर्माहं भोः!' इति ब्रुवन्पादग्रहणं विना यथेष्टमभिवादनं कुर्यात् ॥ २१६ ॥

---

आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा ।
कामरूपेण कौन्तेय दुष्पूरेणानलेन च ॥

(एवं मनुना प्रमदानां न काचिन्निन्दा कृता; कामक्रोधवशानुगस्य पुरुषस्य कीदृशी गतिर्भवतीतीदमेव केवलं स्पष्टीकृतम्) ।

२१५. २.२१३ श्लोके 'स्वभाव एष नारीणां नराणामिह दूषणम्' इति कथितम् । तत्कथनमनेन श्लोकेन स्पष्टीभविष्यति । इदं सर्वं (२१३, २१४, २१५ इत्यत्र) पुरुषदौर्बल्यदृष्ट्या कथितं, न तु नारीनिन्दादृष्ट्या । नारीनिन्दां कथं कर्तुमर्हति मनुः । मातुर्निरतिशयं गौरवं स प्रख्यापयति—

उपाध्यायान्दशाचार्य आचार्याणां शतं पिता ।
सहस्रं तु पितॄन्माता गौरवेणातिरिच्यते ॥

(मनुस्मृतिः २.१४५)

माता पृथिव्या मूर्तिः । (मनुस्मृति २.२२८)

२१६. चाहे तो युवा (शिष्य) युवती गुरुपत्नियों का विधिवत् पृथ्वी पर वन्दन करे (पृथ्वी पर लेटकर प्रणाम करे) 'यह मैं हूँ' इस प्रकार कहता हुआ।

**विप्रोष्य पादग्रहणमन्वहं चाभिवादनम् ।**

**गुरुदारेषु कुर्वीत सतां धर्ममनुस्मरन् ॥ २१७ ॥**

विप्रोष्येति ॥ प्रवासादागत्य 'सव्येन सव्यं दक्षिणेन च दक्षिणम्' इत्युक्तविधिना पादग्रहणं प्रत्यहं भूमावभिवादनं च गुरुपत्नीषु युवा कुर्यात् । शिष्टानामयमाचार इति जानन् ॥ २१७ ॥

२१७. 'सत्' जनों के धर्म को स्मरण रखता हुआ [युवा शिष्य] गुरुपत्नियों के विषय में प्रवास से लौटकर पादग्रहण करे तथा प्रतिदिन [२१६ श्लोक में कथित] अभिवादन करे।

उक्तस्य शुश्रूषाविधेः फलमाह—

**यथा खनन्खनित्रेण नरो वार्यधिगच्छति ।**

**तथा गुरुगतां विद्यां शुश्रूषुरधिगच्छति ॥ २१८ ॥**

यथेति ॥ यथा कश्चिन्मनुष्यः खनित्रेण भूमिं खनन् जलं प्राप्नोति, एवं गुरौ स्थितां विद्यां गुरुसेवापरः शिष्यः प्राप्नोति ॥ २१८ ॥

२१८. जैसे मनुष्य खनित्र (कुदाली, फावड़ा आदि) से खोदता हुआ जल को प्राप्त कर लेता है, इसी प्रकार गुरु में गई हुई (गुरु में विद्यमान) विद्या को सेवा में लगा हुआ [शिष्य] प्राप्त कर लेता है।

ब्रह्मचारिणः प्रकारत्रयमाह—

**मुण्डो वा जटिलो वा स्यादथवा स्याच्छिखाजटः ।**

**नैनं ग्रामेऽभिनिम्लोचेत् सूर्यो नाभ्युदियात्क्वचित् ॥२१९॥**

---

२१६. युवा शिष्यो यदीच्छेत्तदा युवतीनां गुरुपत्नीनां वन्दनं भूमौ निपत्य स्वनामोच्चारणपूर्वकं कर्तुं पारयति, परन्तु पादस्पर्शं पादग्रहणं वा न करोतु।

२१७. २१६ श्लोके यो नियमः कथितस्तस्यापवादोऽयम् । प्रवासान्निवृत्तौ युवाशिष्यः पादग्रहणं करोतु । तदनन्तरं प्रतिदिनं 'भुवि वन्दनं कुर्यात्' ।

मुण्डो वेति॥ मुण्डितमस्तकः, शिरःकेशजटावान्वा, शिखैव वा जटा जाता यस्य वा, परे शिरःकेशा मुण्डितास्तथा वा भवेत्। एनं ब्रह्मचारिणं क्वचिद् ग्रामे निद्राणं, उत्तरत्र 'शयानम्' इति दर्शनात्सूर्यो नाभिनिम्लोचेन्नास्तमियात्॥ २१९॥

२१९. मुण्ड (सिर मुंडाए हुए) हो या जटाधारी अथवा शिखाजट (शिखा-रूप एक जटा वाला, बाकी सिर मुंडा हुआ) हो; ग्राम में [सोए हुए] इसे कभी न तो सूर्य उदय हो, न अस्त हो।

अथ प्रायश्चित्तमाह—

तं चेदभ्युदियात्सूर्यः शयानं कामचारतः।
निम्लोचेद्वाऽप्यविज्ञानाज्जपन्नुपवसेद् दिनम्॥२२०॥

तं चेदिति॥ तं चेत्कामतो निद्राणं निद्रोपवशत्वेन सूर्योऽभ्युदियादस्तमियात्तदा सावित्रीं जपन्नुभयत्रापि दिनमुपवसन् रात्रौ भुञ्जीत। अभिनिम्लुक्तस्योत्तरेऽहनि उपवासजपौ। 'अभिरभागे' (पा. १।४।९१) इति कर्मप्रवचनीयसंज्ञा, ततः कर्मप्रवचनीययुक्ते द्वितीया। सावित्रीजपं तु गौतमवचनात्, तदाह गौतमः (२४।२)—'सूर्याभ्युदिते ब्रह्मचारी तिष्ठेदहरभुञ्जानोऽभ्यस्तमिते च रात्रिं जपन्सावित्रीम्'। ननु गौतमवचनात्सूर्याभ्युदितस्यैव दिनाभोजनजपा-युक्तौ, अभ्यस्तमितस्य तु रात्र्यभोजनजपौ। नैतत्; अपेक्षायां व्याख्या-संदेहे वा मुन्यन्तरविवृतमर्थमन्वयं आश्रयामहे न तु स्फुटं मन्वर्थं स्मृत्यन्तर-दर्शनादन्यथा कुर्मः। अत एव जपापेक्षायां गौतमवचनात्सावित्रीजपोऽस्माभिरुक्त एव, न तूभयत्र स्फुटं मनूक्तं दिनोपवासजपाद्यपाकुर्मः। तस्मादभ्यस्तमितस्य मानवगौतमीयप्रायश्चित्तविकल्पः॥ २२०॥

२२०. स्वेच्छा से या अनजाने सोए हुए उसको (उसके सोए हुए होने पर), यदि सूर्य उदय हो या अस्त हो, तो दिन भर [सावित्री का] जप करता हुआ उपवास करे।

अस्य तु प्रायश्चित्तविधेरर्थवादमाह—

सूर्येण ह्यभिनिर्मुक्तः शयानोऽभ्युदितश्च यः।
प्रायश्चित्तमकुर्वाणो युक्तः स्यान्महतैनसा॥२२१॥

आचार्य इति ॥ आचार्यो वेदान्तोदितस्य ब्रह्मणः परमात्मनो मूर्तिः शरीरं, पिता हिरण्यगर्भस्य, माता च धारणात्पृथिवीमूर्तिः, भ्राता च स्वः सगर्भः क्षेत्रज्ञस्य । तस्माद्देवतारूपा एते नावमन्तव्याः ॥ २२६ ॥

२२६. आचार्य ब्रह्म (ब्रह्मन्) की मूर्ति है, पिता प्रजापति की मूर्ति है, माता पृथ्वी की मूर्ति है, अपना भाई [अपनी] आत्मा की मूर्ति है ।

**यं मातापितरौ क्लेशं सहेते संभवे नृणाम् ।**
**न तस्य निष्कृतिः शक्या कर्तुं वर्षशतैरपि ॥ २२७ ॥**

यमिति ॥ नृणामपत्यानां संभवे गर्भाधाने सति अनन्तरं यं क्लेशं माता-पितरौ सहेते तस्य वर्षशतैरप्यनेकैरपि जन्मभिरानृण्यं कर्तुमशक्यम् । मातुस्तावत्कुक्षौ धारणदुःखं, प्रसववेदनातिशयः, जातस्य रक्षणवर्धनकष्टं च पितुरधिकान्येव । रक्षासंवर्धनदुःखं, उपनयनात्प्रभृति वेदतदङ्गाध्यापनादिक्लेशातिशय इति सर्वसिद्धम् ॥ २२७ ॥

२२७. मनुष्यों के पैदा होने में जिस क्लेश को माता-पिता सहते हैं, सौ साल में भी उस का बदला नहीं चुकाया जा सकता ।

तस्मात्

**तयोर्नित्यं प्रियं कुर्यादाचार्यस्य च सर्वदा ।**
**तेष्वेव त्रिषु तुष्टेषु तपः सर्वं समाप्यते ॥ २२८ ॥**

तयोर्नित्यमिति ॥ तयोर्मातापित्रोः प्रत्यहमाचार्यस्य च सर्वदा प्रीतिमुत्पादयेत् । यस्मात्तेष्वेव त्रिषु तुष्टेषु सर्वं तपश्चान्द्रायणादिकं फलद्वारेण सम्यक्प्राप्यते मातादिसंतुष्ट्यैव सर्वस्य तपसः फलं प्राप्यत इत्यादि ॥ २२८ ॥

२२८. सदा उन दोनों का (माता-पिता का) और आचार्य का प्रिय करे । उन तीनों के तुष्ट होने पर सारा तप (तप का फल) भली भांति प्राप्त किया जाता है, अथवा सारा तप समाप्त हो जाता है, तप की चरम सीमा यही है ।

२२७. संभवे = जन्मनि, जन्मगर्भपोषणादिष्विति भावः ।

२२८. समाप्यते=सम्+आप्यते=सम्यक् आप्यते । अथवा समाप्तिं गच्छति । तपसश्चरमसीमा तत्रैवास्तीति भावः ।

**तेषां त्रयाणां शुश्रूषा परमं तप उच्यते ।**
**न तैरनभ्यनुज्ञातो धर्ममन्यं समाचरेत् ॥ २२९ ॥**

तेषामिति ॥ तेषां मातापित्राचार्याणां परिचर्या सर्वं तपोमध्ये श्रेष्ठमित एव सर्वतपःफलप्राप्तेः । यदन्यमपि धर्मं कर्माचरति तदप्येतदनुमति-व्यतिरेकेण न कुर्यात् ॥ २२९ ॥

२२९. उन तीनों की परिचर्या (सेवा करना) परम तप कहलाता है। उनसे अनभ्यनुज्ञात (अनुमति या आज्ञा न दिया गया) अन्य धर्म को न करे।

**त एव हि त्रयो लोकास्त एव त्रय आश्रमाः ।**
**त एव हि त्रयो वेदास्त एवोक्तास्त्रयोऽग्नयः ॥ २३० ॥**

त एवेति ॥ यस्मात्त एव मातापित्राचार्यास्त्रयो लोकाः, लोकत्रयप्राप्तिहेतुत्वात् । कारणे कार्योपचारः । त एव ब्रह्मचर्यादिभावत्रयरूपा आश्रमाः । गार्हस्थ्याद्याश्रमत्रयप्रदायकत्वात् । त एव त्रयो वेदाः, वेदत्रयजपफलोपायत्वात् । त एव हि त्रयोऽग्नयोऽभिहितास्त्रेताग्निसाध्ययज्ञादिफलप्रापकत्वात् ॥ २३० ॥

२३०. वे ही तीन लोक हैं, वे ही तीन आश्रम हैं, वे ही तीन वेद हैं, वे ही तीन अग्नियां कथित हैं।

**पिता वै गार्हपत्योऽग्निर्माताग्निर्दक्षिणः स्मृतः ।**
**गुरुराहवनीयस्तु साग्नित्रेता गरीयसी ॥ २३१ ॥**

पितेति ॥ वैशब्दोऽवधारणे । पितैव गार्हपत्योऽग्निः, माता दक्षिणाग्निः, आचार्य आहवनीयः । सेयमग्नित्रेता श्रेष्ठतरा । स्तुत्यर्थत्वाच्चास्य न वस्तु-विरोधोऽत्र भावनीयः ॥ २३१ ॥

२२९. यदि किंचिद् धर्मकार्यमपि कर्त्तव्यं तेषां चानुज्ञा नास्ति न कुर्यात् ।

२३८. श्रद्धा करता हुआ नीच (शूद्र) से भी शुभ विद्या को, नीचतम (चाण्डाल आदि) से भी परम धर्म को, दुष्कुल (नीच, खराब, दुष्ट कुल) से भी स्त्री-रत्न को ग्रहण कर ले।

**विषादप्यमृतं ग्राह्यं बालादपि सुभाषितम् ।**
**अमित्रादपि सद्वृत्तममेध्यादपि काञ्चनम् ॥ २३९ ॥**

विषादिति ॥ विषं यद्यमृतसंयुक्तं भवति तदा विषमपसार्य तस्मादमृतं ग्राह्यम्, बालादपि हितवचनं ग्राह्यम्, शत्रोरपि सज्जनवृत्तम्, अमेध्यादपि सुवर्णादिकं ग्रहीतव्यम् ॥ २३९ ॥

२३९. विष से भी अमृत, बालक से भी सुभाषित, अमित्र से भी सद्वृत्त (अच्छा या अच्छों का आचरण) और अपवित्र (वस्तु) से भी सुवर्ण ग्राह्य है (ग्रहण कर लेना चाहिए)।

**स्त्रियो रत्नान्यथो विद्या धर्मः शौचं सुभाषितम् ।**
**विविधानि च शिल्पानि समादेयानि सर्वतः ॥ २४० ॥**

स्त्रिय इति ॥ अत्र स्त्र्यादीनामुक्तानामपि दृष्टान्ततोपादानम्; यथा स्त्र्यादयो निकृष्टकुलादिभ्यो गृह्यन्ते तथा अन्यान्यपि हितानि चित्रलेखनादीनि सर्वतः प्रतिग्रहीतव्यानि ॥ २४० ॥

२४०. स्त्रियाँ रत्न, विद्या धर्म, शुद्धता, सुभाषित, तथा विविध शिल्प सब ओर से (सब स्थानों और दिशाओं से) ग्रहण करने योग्य है।

**अब्राह्मणादध्ययनमापत्काले विधीयते ।**
**अनुव्रज्या च शुश्रूषा यावदध्ययनं गुरोः ॥ २४१ ॥**

अब्राह्मणादिति ॥ ब्राह्मणादन्यो यो द्विजः क्षत्रियस्तदभावे वैश्यो वा तस्मादध्ययनमापत्काले ब्राह्मणाध्यापकासंभवे ब्रह्मचारिणो विधीयते। अनुव्रज्यादिरूपा गुरोः शुश्रूषा यावदध्ययनं तावत्कार्या। गुरुपादप्रक्षालनोच्छिष्टप्राशनादिरूपा शुश्रूषाऽप्रशस्ता सा न कार्या। तदर्थमनुव्रज्या चेति विशेषितम्। गुरुत्वमपि यावदध्ययनमेव क्षत्रियस्याह व्यासः (व्या. स्मृ. १।३५)—'मन्त्रदः क्षत्रियो विप्रैः शुश्रूषानुगमादिना। प्राप्तविद्यो ब्राह्मणस्तु पुनस्तस्य गुरुः स्मृतः' ॥ २४१ ॥

२४१. आपत्तिकाल में अब्राह्मण से भी अध्ययन विहित है (विधि से अनुमोदित है); और जब तक पढ़े तब तक (अब्राह्मण) गुरु की अनुव्रज्या और शुश्रूषा करनी चाहिए।

ब्रह्मचारित्वे नैष्ठिकस्याब्राह्मणादध्ययनं प्रसक्तं प्रतिषेधयति—

**नाब्राह्मणे गुरौ शिष्यो वासमात्यन्तिकं वसेत् ।**

**ब्राह्मणे चाननूचाने काङ्क्षन्गतिमनुत्तमाम् ॥ २४२ ॥**

नाब्राह्मण इति ॥ आत्यन्तिकं वासं यावज्जीविकं ब्रह्मचर्यं क्षत्रियादिके गुरौ ब्राह्मणे साङ्गवेदानध्येतरि। अनुत्तमां गतिं मोक्षलक्षणामिच्छन् शिष्यो नावतिष्ठेत ॥ २४२ ॥

२४२. अनुत्तम (सर्वोत्तम, मोक्षरूप) गति को चाहता हुआ (चाहने वाला) शिष्य अब्राह्मण गुरु में (के समीप) तथा अननूचान (साङ्ग वेदों को न पढ़ने वाले) ब्राह्मण गुरु में (के समीप) आत्यन्तिक वास न करे। आत्यन्तिक वास—जीवन भर निवास।

**यदि त्वात्यन्तिकं वासं रोचयेत गुरोः कुले ।**

**युक्तः परिचरेदेनमा शरीरविमोक्षणात् ॥ २४३ ॥**

यदीति ॥ यदि तु गुरोः कुले नैष्ठिकब्रह्मचर्यलक्षणमात्यन्तिकं वासमिच्छेत्तदा यावज्जीवनमुद्युक्तो गुरुं शुश्रूषयेत् ॥ २४३ ॥

२४३. यदि गुरु के कुल में आत्यन्तिक वास करना चाहे तो शरीर छूटने तक युक्त हुआ हुआ (ध्यान और यत्न से) इसकी सेवा करे।

अस्य फलमाह—

**आ समाप्तेः शरीरस्य यस्तु शुश्रूषते गुरुम् ।**

**स गच्छत्यञ्जसा विप्रो ब्रह्मणः सद्म शाश्वतम् ॥ २४४ ॥**

---

२४१. अनुव्रज्या—मनुस्मृतौ, २. १९२-९९ इत्यत्र सविस्तर वर्णिता। अब्राह्मणगुरोरनुव्रज्या शुश्रूषा च कर्तव्ये, परन्तु पादप्रक्षालनोच्छिष्टभक्षणादिकं न कर्तव्यम्।

आ समाप्तेरिति ॥ समाप्तिः शरीरस्य जीवनत्यागः, तत्पर्यन्तं यो गुरुं परिचरति स तत्त्वतो ब्रह्मणः सद्रूपमविनाशि पदं प्राप्नोति । ब्रह्मणि लीयत इत्यर्थः ॥ २४४ ॥

२४४. शरीर की समाप्ति तक जो गुरु की सेवा करता है वह विप्र सीधा ब्रह्म के शाश्वत सद्म (गृह, स्थान, लोक) को प्राप्त होता है।

**न पूर्वं गुरवे किंचिदुपकुर्वीत धर्मवित ।**
**स्नास्यंस्तु गुरुणाज्ञप्तः शक्त्या गुर्वर्थमाहरेत् ॥ २४५ ॥**

न पूर्वमिति ॥ उपकुर्वाणस्यायं विधिः, नैष्ठिकस्य स्नानासंभवात् । गुरुदक्षिणादानधर्मज्ञो ब्रह्मचारी स्नानात्पूर्वं किंचिद्गोवस्त्रादि धनं गुरवे नावश्यं दद्यात् यदि तु यदृच्छातो लभते तदा गुरवे दद्यादेव । अतएव स्नानात्पूर्वं गुरवे दानमाहापस्तम्बः—'यदन्यानि द्रव्याणि यथालाभमुपहरति दक्षिणा एव ताः स एष ब्रह्मचारिणो यज्ञो नित्यव्रतम्' इति । स्नास्यन्पुनर्गुरुणा दत्ताज्ञो यथाशक्ति धनिनं याचित्वापि प्रतिग्रहादिनापि गुरवेऽर्थमाहृत्यावश्यं दद्यात् ॥ २४५ ॥

२४५. धर्म (नियम) को जानने वाला [ब्रह्मचारी] [समावर्तन संस्कार से, स्नातक बनने से] पूर्व गुरु के लिए कुछ उपकार न करे (भेंट आदि न दे)—[जब समावर्तन का] स्नान करने वाला हो, अर्थात् स्नातक बनने वाला हो तब, गुरु द्वारा आज्ञा दिया गया गुरु के लिए [अपनी] शक्ति से [भेंट दक्षिणा] लावे।

कि तत्तदाह—

**क्षेत्रं हिरण्यं गामश्वं छत्रोपानहमासनम् ।**
**धान्यं शाकं च वासांसि गुरवे प्रीतिमावहेत् ॥ २४६ ॥**

क्षेत्रमिति ॥ 'शक्त्या गुर्वर्थमाहरेत्' (२।२४५) इत्युक्तत्वात्क्षेत्रहिरण्यादिकं यथासामर्थ्यं विकल्पितं समुदितं वा गुरवे दत्त्वा तत्प्रीतिमर्जयेत् । विकल्पपक्षे चान्ततोऽन्यासंभवे छत्रोपानहमपि दद्यात्; द्वन्द्वनिर्देशात् समुदितदानम् । प्रदर्शनार्थं चैतत् । संभवेऽन्यदपि दद्यात् । अतएव लघुहारीतः—'एकमप्य-

---

२४५. अनेन योग्यायोग्यगुर्वोरन्तरमपि स्पष्टीभविष्यति ।

धनं यत्तु गुरुः शिष्यं निवेदयेत् । पृथिव्यां नास्ति तद् द्रव्यं यद्दत्त्वा चानृणी भवेत्' ॥ असंभवे शाकमपि दद्यात् ॥ २४६ ॥

२४६. क्षेत्र (खेत, भूमि), सुवर्ण, गौ, घोड़ा, छाता, जूते, आसन, धान्य, शाक और कपड़े [अथवा गुर्वर्थमाहरेत्], [और इस प्रकार] गुरु के लिए प्रीति (प्रसन्नता, तुष्टि) को लाए।

आचार्ये तु खलु प्रेते गुरुपुत्रे गुणान्विते ।
गुरुदारे सपिण्डे वा गुरुवद्वृत्तिमाचरेत् ॥ २४७ ॥

आचार्य इति ॥ नैष्ठिकस्यायमुपदेशः । आचार्ये मृते तत्पुत्रे विद्यादिगुणयुक्ते, तदभावे गुरुपत्न्यां, तदभावे गुरोः सपिण्डे पितृव्यादौ गुरुवच्छुश्रूषामनुतिष्ठेत् ॥ २४७ ॥

२४७. [जिसने आजीवन ब्रह्मचर्य का व्रत लिया है वह] आचार्य के मर जाने पर गुणों से युक्त गुरु के पुत्र में, गुरुपत्नी में अथवा (गुरु के) सपिण्ड (चाचा आदि रिश्तेदारों में) गुरु के समान आचरण करे।

एतेष्वविद्यमानेषु स्नानासनविहारवान् ।
प्रयुञ्जानोऽग्निशुश्रूषां साधयेद् देहमात्मनः ॥ २४८ ॥

एतेष्विति ॥ एतेषु त्रिष्वविद्यमानेषु सततमाचार्यस्यैवाग्नेः समीपे स्नानासनविहारैः सायंप्रातरादौ समिद्धोमादिना चाग्नेः शुश्रूषां कुर्वन्नात्मनो देहमात्मदेहावच्छिन्नं जीवं ब्रह्मप्राप्तियोग्यं साधयेत् ॥ २४८ ॥

२४८. इनके अविद्यमान होने पर स्नान, आसन और विहार से युक्त [आजन्म ब्रह्मचारी] अग्नि की सेवा करता हुआ [अपने] देह को [ब्रह्मप्राप्ति के योग्य होने के लिए] साधे।

---

२४६. एषु द्रव्येषु यथाशक्ति यत्किंचिदपि दातुं शक्नोति, दद्यात् ।

२४७. 'गुणान्विते' इति त्रिभिः (गुरुपुत्रे, गुरुदारे, सपिण्डे) सह संबध्यते । यदि ते गुणान्विता न स्युर्न तदा तेषु गुरुवद्वृत्तिराचरणीया ।

२४७. २४८. २४९. श्लोकेषु नैष्ठिक ब्रह्मचारिण एव चर्चा ।

२४८. एतेष्वविद्यमानेषु—२४७ श्लोके कथितास्त्रयो न स्युरथवा स्युः परं गुणान्विता न स्युस्तदाऽग्निसेवापरः स्यात् । साधयेत्—

एवं चरति यो विप्रो ब्रह्मचर्यमविप्लुतः ।
स गच्छत्युत्तमस्थानं न चेहाजायते पुनः ॥ २४९ ॥

इति मानवे धर्मशास्त्रे भृगुप्रोक्तायां संहितायां द्वितीयोऽध्यायः ॥ २ ॥

एव चरतीति ॥ 'आ समाप्तेः शरीरस्य' (२।२४४) इत्यनेन यावज्जीवमाचार्यशुश्रूषाया मोक्षलक्षणं फलम् । इदानीमाचार्ये मृतेऽपि एवमित्यनेनानन्तरोक्तविधिना आचार्यपुत्रादीनामग्निपर्यन्तानां शुश्रूषको यो नैष्ठिकब्रह्मचर्यमखण्डितव्रतोऽनुतिष्ठति स उत्तमं स्थानं ब्रह्मण्यात्यन्तिकलक्षणं प्राप्नोति । न चेह संसारे कर्मवशादुत्पत्तिं लभते ॥ २४९ ॥

इति श्रीकुल्लूकभट्टकृतायां मन्वर्थमुक्तावल्यां मनुवृत्तौ द्वितीयोऽध्यायः ॥ २ ॥

२४९. जो विप्र इस प्रकार अखण्डित व्रत हुआ हुआ [नैष्ठिक ब्रह्मचर्य आजीवन ब्रह्मचर्य] को करता है, वह उत्तम स्थान (मोक्ष) को प्राप्त होता है और यहां (इस संसार) में फिर जन्म नहीं लेता ।

इत्याचार्यरामदेवात्मजसत्यभूषणयोगिकृतायां विद्याधरीसमाख्यायां हिन्दी-संस्कृतव्याख्यायां मनुवृत्तौ द्वितीयोऽध्यायः ।

---

कुल्लूकः—ब्रह्मप्राप्तियोग्यं साधयेत् । बूलहरः finish (समापयेत्) अर्थात्—अग्निसेवापर आजीवनं तिष्ठेत् ।

विहारः कः ? भिक्षार्थंचरणमथवा समिधाहरणार्थंचरणम् ।

# LAWS OF MANU

( Bühler )

---

## Chapter I.

1. The great sages approached Manu, who was seated with a collected mind, and, having duly worshipped him, spoke as follows :

2. 'Deign, divine one, to declare to us precisely and in due order the sacred laws of each of the (four chief) castes (varna) and of the intermediate ones.

3. 'For thou, O Lord, alone knowest the purport, (i.e.) the rites, and the knowledge of the soul, (taught) in this whole ordinance of the Self-existent (Svayambhū), which is unknowable and unfathomable.'

I. 1. Kull. thinks that pratipūgya, 'having worshipped,' may also mean 'after mutual salutations,' and he connects, against the opinion of the other commentators, 'duly' with 'spoke.' Gov., Nār., Rāgh., and K., as well as various MSS. (Loiseleur I. p. 313; Bikaner Cat. p. 419), begin the Samhitā with the following verse, omitted by Medh., Kull. and Nand.: 'Having adored the self-existent Brahman, possessing immeasurable power, I will declare the various eternal laws which Manu promulgated.'

2. After this verse Nand. inserts four lines, the first and last of which are also found in K.: (a) 'The origin of the whole multitude of created beings, of those born from the womb, of those born from eggs, of those produced from exudations and from germinating seeds, and their destruction; (b) 'The settled rule of all customs and rites deign to describe at large, according to their times and fitness.'

3. 'The ordinance of the Self-existent,' i.e. 'the Veda' (Kull., Nār., and Rāgh.), or 'the Veda or the prescriptive rules (vidhi) contained in it' (Medh.) or 'the institutes' (Gov.). Akintya, 'unknowable,' i.e. 'the extent of which is unknowable' (Kull. and Rāgh.), or 'unknowable on account of its depth' (Gov.), or 'the meaning of which cannot be known by reasoning' (Nār.), or 'not perceptible by the senses' (Medh.), or 'difficult to understand' (Nand.). Aprameya, 'unfathomable,' i.e. 'not to be understood without the help of the Mīmāmsā and other methods of reasoning' (Kull.), or 'unfathomable on account of its extent' (Gov., Nand.), or 'unfathomable on account of its extent' (Gov., Nand.), or 'unfathomable on account of its extent, or not

4. He, whose power is measureless, being thus asked by the high-minded great sages, duly honoured them, and answered, 'Listen !'

5. This (universe) existed in the shape of Darkness, unperceived, destitute of distinctive marks, unattainable by reasoning, unknowable, wholly immersed, as it were, in deep sleep.

directly knowable but to be inferred as the foundation of the Smriti' (Medh.), or 'difficult to understand' (Râgh.). Kull. and Râgh. explain kâryatattvârtha by 'the purport, i.e. the rites, and the nature of the soul;' Medh., Gov., and Nand. by 'the true purport, i.e. the rites.' Nand. takes sarvasya, 'whole,' as depending on 'ordinance,' and in the sense of 'prescribed for all created beings.'

In the commentary on verse 11 Medh. gives still another explanation of this verse, according to which it has to be translated as follows: 'For thou, O Lord, alone knowest the nature and the object of the products employed in the creation of this universe, which is unthinkable on account of its greatness, and unknowable.' This version belongs to 'other' commentators, who explain Manu's whole account of the creation purely on Sâṅkhya principles.

5. The account of the creation given in verses 5-13 bears, as Dr. Muir remarks (Sanskrit Texts, IV, p. 26), some resemblance to that contained in some passages of the Satapatha-brâhmana, especially XI, 1, 6, 1 seqq., and is probably founded on some Vedic work 'with an intermixture of more modern doctrines.' In explanation of the wording of verse 5, Medh. and Kull. point to passages like Rv. X, 129, 3, and Taittirîya-brâhmana II, 8, 9, 4. Sâyana, too, quotes the verse in his commentary on the latter passage.

The commentators Medh. and Gov. explain the fact that Manu, being asked to expound the law, gives an account of the creation, by the supposition that it is intended to show what a great scope the work has, and how necessary its study is, as the production of the various created beings depends on merit and demerit. Kull., on the other hand, tries to prove that the account of the creation, which belongs to the knowledge of the supreme soul, is part of the sacred law, and hence properly finds its place here. All the commentators, with the exception of Râgh., explain tamah, 'darkness,' by mûlaprakriti, 'the root-evolvent' of the Sâṅkhya philosophy, and tamobhûtam, 'in the shape of darkness,' by 'absorbed in the root-evolvent.' Râgh., who throughout explains Manu's sayings in the sense of the Vedânta school, takes it for an equivalent of avidyâ, 'ignorance.' The explanation of the four adjectives, which express in different terms the impossibility of knowing the mûlaprakriti, differs very much in the six commentaries. The most reasonable appears to be Kullûka's view, who assumes that the four words refer to the impossibility of attaining a knowledge of the prakriti by the three means mentioned below, XII, 105, and 'by reasoning' (tarka). He paraphrases apragñâta, 'unperceived,' by 'imperceptible by the senses;' alakshana, 'destitute of marks,' by 'uninferrible;' avigñeya, 'unknowable,' by 'undefinable by words or authoritative statement.'

6. Then the divine Self-existent (Svayambhū, himself) indiscernible, (but) making (all) this, the great elements and the rest, discernible, appeared with irresistible (creative) power, dispelling the darkness.

7. He who can be perceived by the internal organ (alone), who is subtile, (=subtle) indiscernible, and eternal, who contains all created beings and is inconceivable, shone forth of his own (will).

6. [The above translation follows Gov., Nār., and Kull. The other three commentators take mahābhūtādivrittaugāh as a relative compound. On this supposition the translation would run as follows: 'Then the divine Self-existent, (himself) indiscernible, (but) making this (universe) discernible, appeared,—he whose (creative) power works in the great elements and the rest, and who dispels the darkness.'

'Then,' i.e. at the end of the period of destruction. Avyaktah, '(himself) indiscernible,' i.e. 'not to be known except by Yogins' (Medh.), or 'not perceptible by the external senses' (Gov., Kull., Nār.), or 'not to be known except through the texts of the Upanishads' (Rāgh.), or 'difficult to know' (Nand.). Medh. would prefer to read avyaktam, 'this indiscernible (universe).' 'The great elements and the rest,' i.e. 'the other principles, the great one and so forth' (Medh., Gov., Nār., Kull., Nand), or 'egoism' (Rāgh.). 'Appeared,' i.e. 'assumed a body of his own free will, not in consequence of his karman, his acts in a former existence' (Medh., Gov., Kull., Nand.), or 'became discernible' (vyakta), (Nār.), or 'became ready to create' (kāryonmukha), (Rāgh.). Gov. explains vrittaugāh, 'with irresistible power,' by 'who obtained power' (prāptam balam yena). Kull. explains tamonudah, 'dispelling the darkness (i.e. of destruction),' by 'giving an impulse to the root-evolvent,' and Rāgh. takes it in a similar way.

The commentators whose opinion Medh. adduces under verse 11, explained this verse also as a description of the self-evolution which the prakriti performs according to the Sāṅkhyas. They took svayambhūh, 'the self-existent,' in the sense of 'which modifies itself of its own accord;' bhagavān, 'divine,' in the sense of 'which is powerful enough to perform its business' (svavyāpāra īsvarah). The other words presented, of course, no great difficulties.]

7. 'By the two pronouns yo 'sau, "he who," he indicates the supreme soul, known in the whole world, in the Vedas, Purānas, Itihāsas, and so forth' (Kull. in accordance with Medh.). The latter proposes, besides the explanation of atīndriyagrāhyah, 'who can be perceived by the internal organ (or the mind alone),' which Gov., Kull., and Nand. adopt, another one, 'who, being beyond the cognisance of the senses, can be perceived by Yoga-knowledge alone.' Nār. and Rāgh., too, differ from the interpretation given above. 'Subtile,' i.e. 'who is beyond all distinctions, such as small and great' (Medh.), or 'who is unperceivable by the external senses' (Kull.), or 'who is perceivable by subtile understanding only' (Gov.), or 'who is without limbs or parts' (Rāgh.). Nand. points to the common epithet of the supreme soul,

8. He, desiring to produce beings of many kinds from his own body, first with a thought created the waters, and placed his seed in them.

9. That (seed) became a golden egg, in brilliancy equal to the sun; in that (egg) he himself was born as Brahman, the progenitor of the whole world.

10. The waters are called nārāh, (for) the waters are, indeed, the offspring of Nara; as they were his first residence (ayana), he thence is named Nārāyana.

'smaller than small' (Kath. Up. II, 20; Bhagavadgītā VIII, 9). Avyaktah, 'indiscernible,' is taken by Kull. to mean 'destitute of limbs or parts.' Sarvabhūtamayah, 'who contains all created beings,' means, according to Medh., either 'that he conceived the idea of creating all beings,' or 'that, in accordance with the Advaita Vedānta, all beings are illusory modifications of him.' The latter view seems to be the one adopted by all the other commentators. 'Shone forth,' i.e. either 'assumed a visible body' or 'was self-luminous' (Medh.), 'assumed a body' (Gov.), 'appeared in the form of the evolutes, the great one, and so forth' (Kull.), 'became discernible' (Nand.).

8. Besides the passages quoted under verse 5, compare also the Paurānik story of the mundane egg, Wilson, Vishnu-purāna I, pp. 39-40 (ed. Hall). 'He' is according to Medh. and Rāgh. 'Hiranyagarbha,' according to the other commentators, 'the supreme soul.' Medh. refers to Rig-veda X, 121, 1. According to Medh. (verse 11) those who understood the whole passage to refer to the unintelligent prakriti, explained abhidhyāya, 'with a thought,' to mean 'independently of all external action, just as a man performs an act merely by a thought.' They also asserted that the waters were produced as the first element only, but not before the great one and the other principles. Kull., on the other hand, sees in the expressions, used in this verse, the proof that Manu was an adherent of the non-dualistic Vedānta.

9. Medh., Kull., and Rāghava take the epithet 'golden' figuratively, and consider it to be intended to convey the idea of purity or, as Rāgh. also proposes, of brilliancy. Instead of 'he himself was born as Brahman (masc.),' the translation may also be 'Brahmā himself was born.' Medh. gives both explanations. The other commentators adopt that given in the text. The being produced is, according to all except Rāgh., Hiranyagarbha. Rāgh., as a strict Vedāntin, thinks that it is Virāt. All the commentators point out that pitāmaha, 'the progenitor,' lit. the grandfather, is a common name of Brahman (masc.).

10. This punning explanation of Brahman's name Nārāyana occurs in most of the Purānas, see Wilson, Vishnu-purāna I, p. 56 (ed. Hall). Both Medh. and Gov. seem to have read āpo narāh, 'the waters are called narāh.' Nara is another name of the supreme soul.

11. From that (first) cause, which is indiscernible, eternal, and both real and unreal, was produced that male (Purusha), who is famed in this world (under the appellation of) Brahman.

12. The divine one resided in that egg during a whole year, then he himself by his thought (alone) divided it into two halves;

13. And out of those two halves he formed heaven and earth, between them the middle sphere, the eight points of the horizon, and the eternal abode of the waters.

14. From himself (âtmanah) he also drew forth the mind, which is both real and unreal, likewise from the mind egoism, which possesses the function of self-consciousness (and is) lordly ;

11. All our commentators except Râgh., whose explanation is wide off the mark, understand by the '(First) cause' the supreme soul. Sadasadâtmaka, 'who is both real and unreal', means according to Medh., Gov., and Kull. 'who is existent or real, because he can be known through the Veda and Vedânta, but non-existent or unreal, as it were, because he cannot be perceived by the senses.' Nand.'s explanation, 'who is both the real, the efficient cause and the unreal the products, matter and the rest,' seems, however, preferable. He says, sad iti kâranam asad iti prakrityâdi kâryam. Regarding the ancient Vedic term Purusha, 'the male' or 'spirit', see Muir, Sanskrit Texts, V. pp. 367-377.

12. Kull. explains the term 'a year' by 'a year of Brahman.' But Medh. and Gov., who say that a human year is meant, are in accordance with Satapatha-brâhmana XI. 1, 6, 2.

13. The number 'eight' is obtained by adding to the four cardinal points, 'the intermediate ones' north-east, south-east &c.

14-15. The commentators offer two entirely different explanations of these two difficult verses. According to Medh., Gov., Kull., and Râgh. they describe the production of the Tattvas, the principles of the Sâṅkhya system, the first three of which, Mahat, Ahaṅkâra, and Manas, have been placed in an inverted order. Though Manu clearly states ( (verse 14) that the creator drew the Manas (which they take to mean the internal organ) from the âtman (i.e. according to Medh. and Gov. 'from the Pradhâna,' which is his own shape [tatpradhânâd âtmanah svasvarûpât, Medh.], or according to Gov., Kull., and Râgh. 'from the Paramâtman,' the supreme soul, or according to another explanation of Râgh., 'from himself' [svasmât î givasya bhogârtham vâ]), that he drew the Ahaṅkâra, egoism, from the Manas, and that he afterwards created the mahântam âtmânam, 'the great one, the soul;' (i. e. according to Medh. the Mahat which is called the soul because like the soul it is found in all bodies, or according to Kull. the Mahat

